प्रपञ्चोल्लासनिर्मुक्तः प्रत्यक्षः प्रतिभात्मकः ।
प्रबुद्धः परमोदारः परमानन्दसागरः ।। ६४

प्रमाणः प्रणवः प्राज्ञः प्राणदः प्राणनायकः ।
प्रवेगः प्रमदार्धाङ्गः प्रनर्तनपरायणः ।। ६५

बभ्रुर्बहुविधाकारो बलप्रमथनो बली ।
बभ्रुशो भगवान्भाव्यो विव्याधी विगतज्वरः ।। ६६

बिल्मी वरूथी दुन्दुभ्याहनन्यौ प्रमृशाभिधः ।
ब्रह्मविद्यागुरुर्गुह्यो गुह्यकैस्समभिष्टुतः ।। ६७

ब्रह्मविद्याप्रदो ब्रह्म बृहद्गर्भो बृहस्पतिः ।
ब्रह्माण्डकाण्डविस्फोटमहाप्रळयताण्डवः ।। ६८

ब्रह्मिष्ठो ब्रह्मसूत्रार्थो ब्रह्मण्यो ब्रह्मचेतनः ।
भगनेत्रहरो भर्गो भवघ्नो भक्तिमन्निधिः ।। ६९

भद्रो भद्रप्रदो भद्रवाहनो भक्तवत्सलः ।
भावज्ञो बन्धविच्छेत्ता भावातीतोऽभयङ्करः ।। ७०

भावाभावविनिर्मुक्तो भारूपो भावितो भरः ।
भूतमुक्तावलीतन्तुः भूतपूर्वो भुजङ्गभृत् ।। ७१

भूमा भूतपतिर्भव्यो भूर्भुवोव्याहृतिप्रियः ।
भृङ्गिनाट्यप्रमाणज्ञो भ्रमरायितनाट्यकृत् ।। ७२

भ्राजिष्णुर्भावनागम्यो भ्रान्तिज्ञानविनाशनः ।
मनीषी मनुजाधीशो मिथ्याप्रत्ययनाशनः ।। ७३

मनोभर्ता मनोगम्यो मननैकपरायणः ।
मनोवचोभिरग्राह्यो महाबिलकृतालयः ।। ७४

मयस्करो महातीर्थ्यः कूल्यः पार्यः पदात्मकः ।
महर्द्धिर्महिमाधारो महासेनगुरुर्महः ।। ७५

महाकर्ता महाभोक्ता महासंविन्मयो मधुः ।
महातात्पर्यनिलयः प्रत्यग्ब्रह्मैक्यनिश्चयः ।। ७६

महानन्दो महास्कन्दो महेन्द्रो महसान्निधिः ।
महामायो महाग्रासो महावीर्यो महाभुजः ।। ७७

महोग्रताण्डवाभिज्ञः परिभ्रमणताण्डवः ।
माणिभद्रार्चितो मान्यो मायावी मान्त्रिको महान् ।। ७८

मायानाटककृन्मायी मायायन्त्रविमोचकः ।
मायानाट्यविनोदज्ञो मायानटनशिक्षकः ।। ७९

मीढुष्टमो मृगधरो मृकण्डुतनयप्रियः ।
मुनिरातार्य आलाद्यः सिकत्यश्च किँशिलः ।। ८०

मोचको मोहविच्छेत्ता मोदनीयो महाप्रभुः ।
यशस्वी यजमानात्मा यज्ञभुग्यजनप्रियः ।। ८१

यक्षराड्यज्ञफलदो यज्ञमूर्तिर्यशस्करः ।
योगगम्यो योगनिष्ठो योगानन्दो युधिष्ठिरः ।। ८२

योगयोनिर्यथाभूतो यक्षगन्धर्ववन्दितः ।
रविमण्डलमध्यस्थो रजोगुणविवर्जितः ।। ८३

राजराजेश्वरो रम्यो रात्रिंचर विनाशनः ।
रातिर्दातिश्चतुष्पादः स्वात्मबन्धहरः स्वभूः ।। ८४

रुद्राक्षस्रङ्मयाकल्पः कह्लारकिरणद्युतिः ।
रोहितस्स्थपतिर्वृक्षपतिर्मन्त्री च वाणिजः ।। ८५

लास्यामृताब्धिलहरीपूर्णेन्दुः पुण्यगोचरः ।
वरदो वामनो वन्द्यो वरिष्ठो वज्रवर्मभृत् ।। ८६

वराभयप्रदो ब्रह्मपुच्छो ब्रह्मविदां वरः ।
वशी वरेण्यो विततो वज्रभृद्वरुणात्मकः ।। ८७

वह्निमण्डलमध्यस्थो वर्षीयान् वरुणेश्वरः ।
वाच्यवाचकनिर्मुक्तो वागीशो वागगोचरः ।। ८८

विकाररहितो विष्णुर्विराडीशो विराण्मयः ।
विघ्नेश्वरो विघ्ननेता शक्तिपाणिः शरोद्भवः ।। ८९

विजिघत्सो विगतभीर्विपिपासो विभावनः ।
विदग्धमुग्धवेषाढ्यो विश्वातीतो विशोकदः ।। ९०

विद्यानिधिर्विरूपाक्षो विश्वयोनिर्वृषध्वजः ।
विद्युत्यो विवह्यो मेध्यो रेष्मियो वास्तुपो वासुः ।। ९१

विद्वत्तमो विदूरस्थो विश्रमो वेदनामयः ।
वियदादिजगत्स्रष्टा विविधानन्ददायकः ।। ९२

विराट्हृदयपद्मस्थो विधिर्विश्वाधिको विभुः ।
विरूपो विश्वदिग्व्यापी वीतशोको विरोचनः ।। ९३

विश्रान्तिभूर्विवसनो विघ्नहन्ता विनोदकः ।
विशृङ्खलो वियद्धेतुर्विषमो विद्रुमप्रभः ।। ९४

विश्वस्यायतनो वर्यो वन्दारुजनवत्सलः ।
विज्ञानमात्रो विरजाः विरामो विबुधाश्रयः ।। ९५

वीरप्रियो वीतभयो विन्ध्यदर्पविनाशनः ।
वीरभद्रो विशालाक्षो विष्णुबाणो विशां पतिः ।। ९६

वृद्धिक्षयविनिर्मुक्तो विद्योतो विश्ववंचकः ।
वेतालनटनप्रीतो वेतण्डत्वकृताम्बरः ।। ९७

वेदवेद्यो वेदरूपो वेदवेदान्तवित्तमः ।
वेदान्तकृत्तुर्यपादो वैद्युतः सुकृतोद् भवः ।। ९८

वेदार्थविद्वेदयोनिः वेदांगो वेदसंस्तुतः ।
वेलातिलंघिकरुणो विलासी विक्रमोन्नतः ।। ९९

वैकुण्ठवल्लभोऽवर्ष्यो वैश्वानरविलोचनः ।
वैराग्यशेवधिर्विश्वभोक्ता सर्वोर्ध्वसंस्थितः ।। १००

वौषट्कारो वषट्कारो हुंकारः फट्करः पटुः ।
व्याकृतो व्यापृतो व्यापी व्याप्यसाक्षी विशारदः ।।

व्याघ्रपादप्रियो व्याघ्रचर्मधृद्व्याधिनाशनः ।
व्यामोहनाशनो व्यासो व्याख्यामुद्रालसत्करः ।। १०२

व्युप्तकेशोऽथ विशदो विष्वक्सेनो विशोधकः ।
व्योमकेशो व्योममूर्तिर्व्योमाकारोऽव्ययाकृतिः ।। १०३

व्रातो व्रातपतिर्विप्रो वरीयान् क्षुल्लकः क्षमी ।
शक्तिपातकरः शक्तः शाश्वतः श्रेयसां निधिः ।। १०४

शयानः शन्तमः शान्तः शासकः श्यामलाप्रियः ।
शिवङ्करः शिवतरः शिष्टहृष्टः शिवागमः ।। १०५

शीघ्रियश्शीभ्य आनन्दः क्षयद्वीरश्शरोऽक्षरः ।
शुद्धस्फटिकसङ्काशः श्रुतिप्रस्तुतवैभवः ।। १०६

शुष्क्यो हरित्यो लोप्यश्च सूर्म्यः पर्ण्योऽणिमादिभूः ।
शूरसेनः शुभाकारः शुभ्रमूर्तिः शुचिस्मितः ।। १०७

शार्ङ्गः प्रतरणोऽवार्यः फेन्यः शष्प्यः प्रवाहजः ।
श्राव्यः शत्रुहरः शूली श्रुतिस्मृतिविधायकः ।। १०८

श्रीशिवः श्रीशिवानाथःश्रीमान् श्रीपतिपूजितः ।
श्रुत्यः पथ्यस्स्वतन्त्रस्थः काट्यो नीप्यः करोटिभृत् ।। १०९

षडाधारगतः सांख्यः षडक्षरसमाश्रयः ।
षडूर्मिरहितः स्तव्यः षड्गुणैश्वर्यदायकः ।। ११०

सकृद्विभातः संवेत्ता सदसत्कोटिवर्जितः ।
सत्वसंस्थः सुषुप्तिस्थः सुतल्पः सत्स्वरूपगः ।। १११

सद्योजातः सदाराध्यः सामगः सामसंस्तुतः ।
सनातनः समः सत्यः सत्यवादी समृद्धिदः ।। ११२

समदृष्टिः सत्यकामः सनकादिमुनिस्तुतः ।
समस्तभुवनव्यापी समृद्धः सततोदितः ।। ११३

सर्वकृत्सर्वजित्सर्वमयः सत्वावलम्बकः ।
सर्वद्वन्द्वक्षयकरः सर्वापद्विनिवारकः ।। ११४

सर्वदृक् सर्वभृत्सर्गः सर्वहृत्कोशसंस्थितः ।
सर्वप्रियतमः सर्वदारिद्र्यक्लेशनाशनः ।। ११५

सर्वविद्यानामीशान ईश्वराणामधीश्वरः ।
सर्वज्ञः सर्वदः स्थाणुः सर्वेशः समरप्रियः ।। ११६

सर्वातीतः सारतरः साम्बः सारस्वतप्रदः ।
सर्वार्थः सर्वदा तुष्टः सर्वशास्त्रार्थसम्मतः ।। ११७

सर्वेश्वरः सर्वसाक्षी सर्वात्मा साक्षिवर्जितः ।
सव्यताण्डवसम्पन्नो महाताण्डववैभवः ।। ११८

सस्पिंजरः पशुपतिस्त्विषीमानध्वनां पतिः ।
सहमानस्सत्यधर्मा निव्याधी नियमो यमः ॥ ११९

सहस्राक्षः सहस्राङ्घ्रिः सहस्रवदनाम्बुजः ।
सहस्राक्षार्चितः सम्राट् सन्धाता सम्पदालयः ॥ १२०

सिद्धेशः सिद्धिजनकः सिद्धान्तः सिद्धवैभवः ।
सुधारूपः सुराध्यक्षः सुभ्रूः सुखघनः सुधीः ॥ १२१

सुनिश्चितार्थो राद्धान्तः तत्वमर्थस्तपोमयः ।
सुव्रतः सत्यसङ्कल्पः स्वसंवेद्यः सुखावहः ॥ १२२

सूतः सदस्पतिः सूरिरहन्त्यो वनपो वरः ।
सूत्रभूतः स्वप्रकाशः समशीलः सदादयः ॥ १२३

सूत्रात्मा सुलभः स्वच्छः सूदरः सुन्दराननः ।
सूद्यस्सरस्यो वैशन्तो नाद्योऽवटच्योऽथ वर्षकः ॥ १२४

सूक्ष्मात्सूक्ष्मतरः सूर्यः सूक्ष्मस्थूलत्ववर्जितः ।
सृकावी मुष्णतां नाथः पञ्चाशद्वर्णरूपभृत् ॥ १२५

सोममण्डलमध्यस्थः सोमः सौम्यः सुहृद्वरः ।
सङ्कल्पोल्लासनिर्मुक्तः समनीरागचेतनः ॥ १२६

सम्पन्नः संक्रमः सत्री सन्दाता सकलोर्जितः ।
संप्रवृद्धः सन्निकृष्टः संविमृष्टः समग्रदृक् ॥ १२७

संप्रहृष्टः सन्निविष्टः संस्पष्टः संप्रमर्दनः ।
संयद्वामः संयमीन्द्रः संशयच्छित् सहस्रदृक् ॥ १२८

संयमस्थः संहृदिस्थः संप्रविष्टः समुत्सुकः ।
संवत्सरः कलापूर्णस्सुरासुरनमस्कृतः ॥ १२९

संवर्ताग्न्युदरः सर्वान्तरस्थस्सर्वदुर्ग्रहः ।
संशान्तसर्वसङ्कल्पः संसदीशः सदोदितः ॥ १३०

स्फुरड्डमरुनिध्वाननिर्जिताम्भोधिनिस्वनः ।
स्वच्छन्दः स्वच्छसंवित्तिरन्वेष्टव्योऽश्रुतोऽमतः ॥

स्वात्मस्थःस्वायुधः स्वामी स्वानन्यः स्वांशिताखिलः ।
स्वाहारूपो वसुमनाः वटुकः क्षेत्रपालकः ॥ १३२

हितः प्रमाता प्राग्वर्ती सर्वोपनिषदाशयः ।
हिरण्यबाहुस्सेनानीर्हरिकेशो दिशांपतिः ॥ १३३

हेतुदृष्टान्तनिर्मुक्तो हेतुर्हेरम्बजन्मभूः ।
हेयादेयविनिर्मुक्तो हेलाकलितताण्डवः ॥ १३४

हेलाविनिर्मितजगद्धेमश्मश्रुर्हिरण्मयः ।
ज्ञानलिङ्गो गतिर्ज्ञानी ज्ञानगम्योऽभासकः ॥ १३५

## ॥ उत्तर पीठिका ॥

इति कुञ्चितपादस्य नटराजस्य सुन्दरम् ।
नाम्नां सहस्रं संप्रोक्तं मया देवि त्वदादरात् ॥ १

सर्वमन्त्रमयं ह्येतत् न प्रकाश्यं कदाचन ।
सच्छिष्याय विनीताय भक्ताय नटनायके ॥ २

कराङ्गन्याससंयुक्तं प्रोक्तव्यं ध्यानसंयुतम् ।
कन्यार्थी लभते कन्यां धनार्थी धनमाप्नुयात् ॥

विद्यार्थी लभते विद्यां पुत्रार्थी पुत्रमाप्नुयात् ।
यद्यत् प्रार्थयते मर्त्यः तत्सर्वं लभते ध्रुवम् ॥ ४

सर्वसिद्धिकरं पुण्यं सर्वविद्याविवर्द्धनम् ।
सर्वसंपत्प्रदमिदं सर्वापद्घ्नमघापहम् ॥ ५

आभिचारप्रयोगादिमहाकृत्यानिवारणम् ।
अपस्मारमहाव्याधिज्वरकुष्ठादिनाशनम् ।। ६

अत्युत्पातभयक्षोभक्षुद्रवारणकारणम् ।
कूश्माण्डरुद्रवेतालशाकिन्यादिभयापहम् ।। ७

स्मरणादेव जन्तूनां ब्रह्महत्यादिनाशनम् ।
अस्मात्परतरं स्तोत्रं नास्ति लोकत्रयेऽम्बिके ।। ८

एतन्नामसहस्रस्य पठनात्सकृदेव हि ।
महापातकयुक्तोऽपि शिवसायुज्यमाप्नुयात् ।। ९

प्रयोगलक्षणं वक्ष्ये शृणु शैलसुतेऽधुना ।
पञ्चम्यामथवाष्टम्यां दशम्यां वा विशेषतः ।। १०

स्नात्वा शुभासने स्थित्वा ध्यायन् श्रीनटनायकम् ।
प्रजपेत् द्वादशावृत्या सर्वान्कामानवाप्नुयात् ।। ११

आर्द्रायां प्रातरारभ्य नटनाथस्य सन्निधौ ।
आसायं प्रजपेदेतत् एवं संवत्सरत्रयम् ।। १२

तस्य भक्तस्य देवेशः नटनं दर्शयेत्प्रभुः ।
बिल्ववृक्षस्य निकटे प्रदोषे प्रजपेदिदम् ।। १३

षड्भिर्मासैर्महैश्वर्यं लभते नचिरान्नरः ।
अनेन स्तोत्रराजेन मन्त्रितं भस्म धारयेत् ।। १४

भस्मावलोकनान्मृत्युर्वश्यो भवति तत्क्षणात् ।
सलिलं प्राशयेद्धीमान्मन्त्रेणानेन मन्त्रितम् ।। १५

सर्वविद्यामयो भूत्वा व्याकरोत्यश्रुतादिकम् ।
नाटकादिमहाग्रन्थं कुरुते नात्र संशयः ।। १६

चतुर्थ्यन्तं समुच्चार्य नामैकं तु ततो जपेत् ।
पञ्चाक्षरं तथा नाम्नां सहस्रं प्रजपेत्क्रमात् ।। १७

एवं त्रिवारं मासानां अष्टाविंशतिके गते ।
निग्रहानुग्रहौ कर्तुं शक्तिरस्योपजायते ।। १८

नाम्नामादौ तथान्ते च पञ्चाक्षरमहामनुम् ।
जप्त्वा मध्यस्थितं नाम निर्नमोन्तं सदाऽसकृत् ।। १९

चतुर्थ्यन्तं जपेद्धीमान् त्रिवर्षं च त्रिवारकैः ।
अणिमादिमहासिद्धिमचिरात्प्राप्नुयाद्ध्रुवम् ।। २०

सर्वेष्वपि च लोकेषु सिद्धस्सन्नाचरेन्नरः ।
लक्ष्मीबीजद्वयक्षिप्तमाद्यन्ते नाम यश्शिवे ।। २१

वाञ्छितां श्रियमाप्नोति सत्यमुक्तं वरानने ।
हृल्लेखामन्त्रसंयुक्तं पूर्ववत्संयुतं जपेत् ।। २२

योगसिद्धिर्भवेत्तस्य त्रिचतुःपञ्चवत्सरैः ।
किमत्र बहुनोक्तेन या या सिद्धिरभीप्सिता ।। २३

सा सा सिद्धिर्भवेदस्य सत्यमेव मयोदितम् ।
कण्ठदघ्नजले स्थित्वा त्रिवारं प्रजपेदिदम् ।। २४

रिपूनुच्चाटयेच्छीघ्रमेकेनैव दिनेन सः ।
दक्षिणाभिमुखो भूत्वा धृत्वार्द्रवसनं शुचिः ।। २५

शत्रुनाम समुच्चार्य मारयेति पदाङ्कितम् ।
पठेदिमं स्तवं क्रोधात्सप्तकृत्वः त्रिभिर्दिनैः ।। २६

स रिपुर्मृत्युगेहस्य ध्रुवमातिथ्यभाग्भवेत् ।
हरिद्रया नटाधीशं कृत्वा प्राणान्प्रतिष्ठिपेत् ।। २७

पीतपुष्पैस्समभ्यर्च्य स्तोत्रमेतज्जपेन्नरः ।
स्तम्भयेत्सकलान् लोकान् किमिह क्षुद्रमानुषान् ।। २८

आकर्षणाय सर्वेषामुत्तराभिमुखो जपेत् ।
वाञ्छिताः योषितस्सर्वास्तथा लोकान्तरस्थिताः ।। २९

यक्षाश्च किन्नराश्चापि राजानो वशमाप्नुयुः ।
कुम्भस्थितं जलं स्पृष्ट्वा त्रिवारं प्रजपेदिदम् ।। ३०

महाग्रहगणग्रस्तानभिषेकं तु कारयेत् ।
जलदर्शनमात्रेण मुच्यते च ग्रहादिभिः ।। ३१

अकारादिज्ञकारान्तनामग्रथितमुत्तमम् ।
स्तोत्रमेतज्जपित्वा च पठित्वा श्रियमाप्नुयात् ।। ३२

पूजयित्वा नामभिश्च नटेशप्रीतिभाग्भवेत् ।
किमत्र बहुनोक्तेन सिद्ध्यन्त्यखिलसिद्धयः ।। ३३

साक्षान्नटेश्वरो देवो वश्यो भवति शैलजे ।
अस्मात्परतरा सिद्धिः का वास्ति कथय प्रिये ।। ३४

निष्कामस्त्वचिरादेव ब्रह्मज्ञानमवाप्नुयात् ।
तस्मात्सर्वप्रयत्नेन यतिभिर्ब्रह्मचारिभिः ।। ३५

वनस्थैश्च गृहस्थैश्च सर्वैर्जप्यं प्रयत्नतः ।
नित्यकर्मवदेवेदं स्तोत्रं जप्यं सदादरात् ।। ३६

ब्रह्मादयोऽपि यन्नामपाठस्यैव प्रसादतः ।
सृष्टिस्थित्यन्तकर्तारो जगतां चिरजीविनः ।। ३७

अन्ये च मुनयस्सर्वे हयग्रीवादयः पुरा ।
पठित्वा परमां सिद्धिं पुनरावृत्तिवर्जिताम् ।। ३८

लेभिरे तदिदं स्तोत्रं पठ त्वमपि शैलजे ।
अस्मात्परतरं वेद्यं नास्ति सत्यं मयोदितम् ।। ३९

श्रीभृङ्गिरिटि संहितायां श्रीशिवकामसुन्दरीसमेत श्री नटराजराज कुञ्चितपादसहस्रनामस्तोत्रं संपूर्णम् ।।

## ।। शिवम् ।।

ततः चिन्तामणिमन्त्रेण अङ्गन्यासं, ध्यायेत्कोटि रविप्रभमिति फालेरत्नत्रिपुण्ड्रं इति ध्यानं लं पृथिव्यात्मन इति पञ्च पूजां च कुर्यात् *1* भूर्भुवस्सुवरोमिति दिक्विमोकः इति तु विशेषः । चिन्तामणि मन्त्रः सनियमं गुरूपदेशात् ज्ञेयः ।।

यः शिवो नामरूपाभ्यां या देवी सर्वमङ्गला ।
तयोः संस्मरणान्नित्यं सर्वतो जयमङ्गळम् ।।

---

## ।। महोत्सवयात्राक्रमः ।।

मञ्चे चन्द्रार्कभूतेष्वपि वृषगजराड्राजताद्रिष्वथाश्वैः
सोमास्कन्दस्वरूपस्स्वयमुरुनयने गोरथे मार्गणो यः ।
स्थित्वा ब्रह्मोत्सवेषु त्रिषु च नटपतिः प्रत्यहं वीथियात्रां
कृत्वा स्नात्वा सह स्वं प्रविशति शिवया कुञ्चिताङ्घ्रिं भजेऽहम् ।।

मङ्गळं चित्सभेशाय महनीयगुणात्मने ।
चक्रवर्तिनुताय श्रीनटराजाय मङ्गळम् ।।

।। नटराजराजः शुभमातनोतु ।।

---

# श्री कुञ्चितपादसहस्रनामावलिः

## ओं नमः

अखण्डबोधाय नमः । अखण्डात्मने नमः । घण्टामण्डलमण्डिताय नमः । अखण्डानन्दचिद्रूपाय नमः । परमानन्दताण्डवाय नमः । अगम्यमहिमाम्भोधये नमः । अनौपम्य यशोनिधये नमः । अग्रेवधाय नमः । अग्रेसंपूज्याय नमः । हन्त्रे नमः । ताराय नमः । मयोभवाय नमः । अघोराय नमः । अद्भुतचारित्राय नमः । आनन्दवपुषे नमः । अग्रण्ये नमः । अजीर्णाय नमः । सुकुमाराय नमः । अन्यस्मै नमः । पारदर्शिने नमः । २०

पुरन्दराय नमः । अतर्क्याय नमः । सुकराय नमः । साराय नमः । सत्तामात्राय नमः । सदाशिवाय नमः । अनन्तरूपाय नमः । एकात्मने नमः । स्वस्तरवे नमः । व्याहृतये नमः । स्वधा(यै)नमः । अनन्तशक्तये नमः । आचार्याय नमः । पुष्कलाय नमः । सर्वपूरणाय नमः । अनर्घ्यरत्नखचितकिरीटाय नमः । निकटे स्थिताय नमः । अनहङ्कृतये नमः । अच्छेद्याय नमः । स्वानन्दैकघनाकृतये नमः । ४०

अनावरणविज्ञानाय नमः । निर्विभागाय नमः । विभावसवे नमः । अनिर्देश्याय नमः । अनिलाय नमः । अगम्याय नमः । अविक्रियाय नमः । अमोघवैभवाय नमः । अनुत्तमाय नमः । परोदासाय नमः । मुक्तिदाय नमः । मुदिताननाय नमः । अन्नानां पतये नमः । अत्युग्राय नमः । हरिध्येयाय नमः । अद्वयाकृतये नमः । अपरोक्षाय नमः । अव्रणाय नमः । अलिङ्गाय नमः । अद्वेष्ट्रे नमः । (६०)

प्रेमसागराय नमः । अपर्यन्ताय नमः । अपरिच्छेद्याय नमः । अगोचराय नमः । रुग्विमोचकाय नमः । अपस्मृतिन्यस्तपादाय नमः । कृत्तिवाससे नमः । कृपाकराय नमः । अप्रमेयाय नमः । अप्रतिरथाय नमः । प्रद्युम्नाय नमः । प्रमथेश्वराय नमः । अमानिने नमः । मदनाय नमः । अमन्यवे नमः । अमानाय नमः । मानदाय नमः । मनवे नमः । अमूल्यमणिसंभास्वत्फणीन्द्रकरकङ्कणाय नमः । अरुणाय नमः । ८०

शरणाय नमः । शर्वाय नमः । शरण्याय नमः । शर्मदाय नमः । शिवाय नमः । अवशाय नमः । स्ववशाय नमः । स्थास्नवे नमः । अन्तर्यामिणे नमः । शतक्रतवे नमः । अशुभक्षयकृते नमः । ज्योतिषे नमः । अनाकाशाय नमः । अलेपकाय नमः । अस्नेहाय नमः । सङ्गनिर्मुक्ताय नमः । अह्रस्वाय नमः । अदीर्घाय नमः । अविशेषकाय नमः । अक्षराय नमः । १००

त्र्यक्षराय नमः । त्र्यक्षाय नमः । पक्षपातविवर्जिताय नमः । आततायिने नमः । महारुद्राय नमः । क्षेत्राणां अधिपाय नमः । अक्षदाय नमः । आतन्वानाय नमः । शतानन्दाय नमः । गृत्साय नमः । गृत्सपतये नमः । सुराय नमः । आदित्यवर्णाय नमः । संज्योतिषे नमः । सम्यग्दर्शनतत्पराय नमः । आदिभूताय नमः । महाभूताय नमः । स्वेच्छाकलित विग्रहाय नमः । आप्तकामाय नमः । अनुमन्त्रे १२०

आत्मकामाय नमः । अभिन्नाय नमः । अनणवे नमः । हराय नमः । आभास्वराय नमः । परस्मै तत्त्वाय नमः । आदिमाय नमः । पेशलाय नमः । पवये नमः । आव्याधिपतये नमः । आदित्याय नमः । ककुभाय नमः । कालकोविदाय नमः ।

इच्छानिच्छाविरहिताय नमः । विहारिणे नमः । वीर्यवर्धनाय नमः । उद्दण्डताण्डवाय नमः । चण्डाय नमः । ऊर्ध्वताण्डवपण्डिताय नमः । उदासीनाय नमः । १४०

उपद्रष्ट्रे नमः । मौनगम्याय नमः । मुनीश्वराय नमः । ऊर्ध्वपदे नमः । ऊर्ध्वरेतसे नमः । प्रौढनर्तनलम्पटाय नमः । औषधीशाय नमः । सतामीशाय नमः । उच्चैर्घोषाय नमः । विभीषणाय नमः । कन्दर्पकोटिसदृशाय नमः । कपर्दिने नमः । कमलाननाय नमः । कपालमालाभरणाय नमः । कङ्कालाय नमः । कलिनाशनाय नमः । कपालमालालङ्काराय नमः । कालान्तकवपुर्धराय नमः । कमनीयाय नमः । कलनाथशेखराय नमः । १६०

कम्बुकन्धराय नमः । कमनीयनिजानन्दमुद्राञ्चित-कराम्बुजाय नमः। कराब्जधृतकालाग्नये नमः । कदम्बकुसुमारुणाय नमः । करिचर्माम्बरधराय नमः । कपालिने नमः । कलुषापहाय नमः। कल्याणमूर्तये नमः। कल्याणीरमणाय नमः । कमलेक्षणाय नमः । कक्षपाय नमः । भुवन्तये नमः । भवाख्याय नमः । वारिवस्कृताय नमः । कालकण्ठाय नमः । कालकालाय नमः । कालकूटविषाशनाय नमः । कालनेत्रे नमः । कालहन्त्रे नमः । कालचक्रप्रवर्तकाय नमः । १८०

कालज्ञाय नमः । कामदाय नमः । कान्ताय नमः । कामारये नमः । कामपालकाय नमः । कालात्मने नमः । कालिकानाथाय नमः । कार्कोटकविभूषणाय नमः । कालिका नाट्यरसिकाय नमः । निशानटनश्चिलाय नमः । कालीवादप्रियाय नमः । कालाय नमः । कालातीताय नमः । कलाधराय नमः । कुठारभृते

नमः । कुलाद्रीशाय नमः । कुञ्चितैकपदाम्बुजाय नमः । कुलुञ्चानां पतये नमः । कूप्याय नमः । धन्वाविने नमः । (२००)

धनदाधिपाय नमः । कूटस्थाय नमः । कूर्मपीठस्थाय नमः । कूश्माण्डग्रहमोचकाय नमः । कूलङ्कषकृपासिन्धवे नमः । कुशलिने नमः । कुङ्कुमेश्वराय नमः । कृतज्ञाय नमः । कृतिसारज्ञाय नमः । कृशानवे नमः । कृष्णपिङ्गलाय नमः । कृताकृताय नमः । कृशाय नमः । कृष्णाय नमः । शान्तिदाय नमः । शरभाकृतये नमः । कृतान्तकृते नमः । क्रियाधाराय नमः । कृतिने नमः । कृपणरक्षकाय नमः । (२२०)

केवलाय नमः । केशवाय नमः । केलीकराय नमः । केवलनायकाय नमः । कैलासवासिने नमः । कामेशाय नमः । कवये नमः । कपटवर्जिताय नमः । कोटिकन्दर्प सौभाग्य सुन्दराय नमः । मधुरस्मिताय नमः । (२३०) गदाधराय नमः । गणस्वामिने नमः । गरिष्ठाय नमः । तोमरायुधाय नमः । गर्विताय नमः । गगनावासाय नमः । ग्रन्थित्रयविभेदनाय नमः । गह्वरेष्ठाय नमः । गणाधीशाय नमः । गणेशाय नमः । २४०

गतिवर्जिताय नमः । गायकाय नमः । गरुडारूढाय नमः । गजासुरविमर्दनाय नमः । गायत्रीवल्लभाय नमः । गार्ग्याय नमः । गायकानुग्रहोन्मुखाय नमः । गुहाशयाय नमः । गुणातीताय नमः । गुरुमूर्तये नमः । (२५०) गुहप्रियाय नमः । गूढाय नमः । गुह्यतराय नमः । गोप्याय नमः । गोरक्षिणे नमः । गणसेविताय नमः । चतुर्भुजाय नमः । शततनवे नमः । शमिताखिल कौतुकाय नमः । चतुर्वक्त्राय नमः । (२६०)

चक्रधराय नमः । पञ्चवक्त्राय नमः । परन्तपाय नमः । चिच्छक्तिलोचनानन्दकन्दलाय नमः । कुन्दपाण्डराय नमः ।

चिदानन्दनटाधीशाय नमः । चित्केवलवपुर्धराय नमः । चिदेकरससंपूर्णाय नमः । ह्रीं शिवाय नमः । श्री महेश्वराय नमः । चैतन्याय नमः । चिच्छिदे नमः । अद्वैताय नमः । चिन्मात्राय नमः । चित्सभाधिपाय नमः । जटाधराय नमः । अमृताधाराय नमः । अमृतांशवे नमः । अमृतोद्भवाय नमः । जटिलाय नमः । २८०

चटुलापाङ्गाय नमः । महानटनलम्पटाय नमः । जनार्दनाय नमः । जगत्स्वामिने नमः । जन्मकर्मनिवारकाय नमः । जवनाय नमः । जगदाधाराय नमः । जमदग्नये नमः । जराहराय नमः । जह्नुकन्याधराय नमः । जन्मजरामृत्युनिवारकाय नमः । णान्तनादिनामयुक्त विष्णुनम्यपदाम्बुजाय नमः । तत्वावबोधाय नमः । तत्वेशाय नमः । तत्वभावाय नमः । तपोनिधये नमः । तरुणाय नमः । तारकाय नमः । ताम्राय नमः । तरिष्णवे नमः । ३००

तत्वबोधकाय नमः । त्रिधाम्ने नमः । त्रिजगद्धेतवे नमः । त्रिमूर्तये नमः । तिर्यगूर्ध्वगाय नमः । त्रिमातृकाय नमः । त्रिवृद्रूपाय नमः । तृतीयाय नमः । त्रिगुणाधिकाय नमः । दक्षाध्वरहराय नमः । दक्षाय नमः । दहरस्थाय नमः । दयानिधये नमः । दक्षिणाग्नये नमः । गार्हपत्याय नमः । दमनाय नमः । दानवान्तकाय नमः । दीर्घपिङ्गजटाजूटाय नमः । दीर्घबाहवे नमः । दिगम्बराय नमः । ३२०

दुराराध्याय नमः । दुराधर्षाय नमः । दुष्टदूराय नमः । दुरासदाय नमः । दुर्विज्ञेयाय नमः । दुराचारनाशनाय नमः । दुर्मदान्तकाय नमः । दैव्याय नमः । भिषजे नमः । प्रमाणज्ञाय नमः । ब्रह्मण्याय नमः । ब्राह्मणात्मकाय नमः । द्रष्ट्रे नमः । दर्शयित्रे नमः । दान्ताय नमः । दक्षिणामूर्तिरूपभृते नमः । धन्विने नमः । धनाधिपाय नमः । धन्याय नमः । धर्मगोप्त्रे नमः । ३४०

धराधिपाय नमः । धृष्णवे नमः । दूताय नमः । तीक्ष्णदंष्ट्राय नमः । सुधन्वने नमः । सुतदाय नमः । सुखिने नमः । ध्यानगम्याय नमः । ध्यातृरूपाय नमः । ध्येयाय नमः । धर्मविदां वराय नमः । नक्तञ्चराय नमः । प्रकृन्तानां पतये नमः । गिरिचराय नमः । गुरवे नमः । नन्दिनाट्यप्रियाय नमः । नन्दिने नमः । नटेशाय नमः । नटवेषभृते नमः । नमदानन्ददाय मम: । ३६०

नम्याय नमः । नगराजनिकेतनाय नमः । नारसिंहाय नमः । नगाध्यक्षाय नमः । नादान्ताय नमः । नादवर्जिताय नमः । निचेरुकाय नमः । परिचराय नमः । अरण्यानां पतये नमः । अद्भुताय नमः । निरङ्कुशाय नमः । निराधाराय नमः । निरपायाय नमः । निरत्ययाय नमः । निरञ्जनाय नमः । नित्यशुद्धाय नमः । नित्यबुद्धाय नमः । निराश्रयाय नमः । निरंशाय नमः । निगमानन्दाय नमः । ३८०

निरानन्दाय नमः । निदानभुवे नमः । निर्वाणदाय नमः । निर्वृतिस्थाय नमः । निर्वैराय नमः । निरुपाधिकाय नमः । निर्विकल्पाय नमः । निरालम्बाय नमः । निर्विकाराय नमः । निरामयाय नमः । निषङ्गिणे नमः । इषुधिमते नमः । इन्द्राय नमः । तस्कराणां अधीश्वराय नमः । निःस्पन्दाय नमः । प्रत्ययानन्दाय नमः । निर्निमेषाय नमः । निरन्तराय नमः । नैष्कर्म्यदाय नमः । नवरसाय नमः । ४००

त्रिस्थाय नमः । त्रिपुरभैरवाय नमः । पञ्चभूतप्रभवे नमः । पञ्चपूजासन्तुष्टमानसाय नमः । पञ्चयज्ञप्रियाय नमः । पञ्चप्राणाधिपतये नमः । अव्ययाय नमः । पतञ्जलिप्राणनाथाय नमः । परापरविवर्जिताय नमः । पतये नमः । पञ्चत्वनिर्मुक्ताय नमः । पञ्चकृत्यपरायणाय नमः । पत्तीनामधिपाय नमः । कृत्स्नवीताय नमः । धावते नमः । सत्त्वपाय नमः । परमात्मने नमः । परस्मै ज्योतिषे नमः । परमेष्ठिने नमः । परात्पराय नमः । ४२०

पर्णशद्याय नमः । प्रत्यगात्मने नमः । प्रसन्नाय नमः । परमोन्नताय नमः । पवित्राय नमः । पार्वतीदाराय नमः । परमापन्निवारकाय नमः । पाटलांशवे नमः । पटुतराय नमः । परिजातद्रुमूलगाय नमः । पापाटवीबृहद्भानवे नमः । भानुमत्कोटिकोटिभाय नमः । पाशिने नमः । पातकसंहर्त्रे नमः । तीक्ष्णेषवे नमः । तिमिरापहाय नमः । पुण्याय नमः । पुंसे नमः । पुरीशयाय नमः । पूष्णे नमः । ४४०

पूर्णाय नमः । पुरातनाय नमः । पुरजिते नमः । पूर्वजाय नमः । पुष्पहासाय नमः । पुण्यफलप्रदाय नमः । पुरुहूताय नमः । पुरद्वेषिणे नमः । पुरत्रय विहारवते नमः । पुलस्त्याय नमः । क्षयणाय नमः । गृह्याय नमः । गोष्ठ्याय नमः । गोपरिपालकाय नमः । पुष्टानां पतये नमः । अव्यग्राय नमः । भवहेतये नमः । जगत्पतये नमः । प्रकृतीशाय नमः । प्रतिष्ठात्रे नमः । ४६०

प्रभवाय नमः । प्रमथाय नमः । प्रथिने नमः । प्रपञ्चोपशमाय नमः । नामरूपद्वयविवर्जिताय नमः । प्रपञ्चोल्लासनिर्मुक्ताय नमः । प्रत्यक्षाय नमः । प्रतिभात्मकाय नमः । प्रबुद्धाय नमः । परमोदाराय नमः । परमानन्दसागराय नमः । प्रमाणाय नमः । प्रणवाय नमः । प्राज्ञाय नमः । प्राणदाय नमः । प्राणनायकाय नमः । प्रवेगाय नमः । प्रमदार्धाङ्गाय नमः । प्रनर्तनपरायणाय नमः । बभ्रवे नमः । ४८०

बहुविधाकाराय नमः । बलप्रमथनाय नमः । बलिने नमः । बभ्रुशाय नमः । भगवते नमः । भाव्याय नमः । विव्याधिने नमः । विगतज्वराय नमः । बिल्मिने नमः । वरुथिने नमः । दुन्दुभ्याय नमः । आहनन्याय नमः । प्रमृशाभिधाय नमः । ब्रह्मविद्यागुरवे नमः । गुह्याय नमः । गुह्यकैः समभिष्टुताय नमः । ब्रह्मविद्याप्रदाय नमः । ब्रह्मणे नमः । बृहद्गर्भाय नमः । बृहस्पतये नमः । ५००

ब्रह्माण्डकाण्ड विस्फोटमहाप्रलयताण्डवाय नमः । ब्रह्मिष्ठाय नमः । ब्रह्मसूत्रार्थाय नमः । ब्रह्मण्याय नमः । ब्रह्मचेतनाय नमः ।

भगनेत्रहराय नमः । भर्गाय नमः । भवघ्नाय नमः । भक्तिमन्निधये नमः । भद्राय नमः । भद्रप्रदाय नमः । भद्रवाहनाय नमः । भक्तवत्सलाय नमः । भावज्ञाय नमः । बन्धविच्छेत्रे नमः । भावातीताय नमः । अभयङ्कराय नमः । भावाभावविनिर्मुक्ताय नमः । भारूपाय नमः । भाविताय नमः । ५२०

भराय नमः । भूतमुक्तावलीतन्तवे नमः । भूतपूर्वाय नमः । भुजङ्गभृते नमः । भूम्ने नमः । भूतपतये नमः । भव्याय नमः । भूर्भुवोव्याहृतिप्रियाय नमः । भृङ्गिनाट्यप्रमाणज्ञाय नमः । भ्रमरायितनाट्यकृते नमः । भ्राजिष्णवे नमः । भावनागम्याय नमः । भ्रान्तिज्ञानविनाशनाय नमः । मनीषिणे नमः । मनुजाधीशाय नमः । मिथ्याप्रत्ययनाशनाय नमः । मनोभर्त्रे नमः । मनोगम्याय नमः । मननैकपरायणाय नमः । मनोवचोभिरग्राह्याय नमः । ५४०

महाबिलकृतालयाय नमः । मयस्कराय नमः । महातीर्थ्याय नमः । कूल्याय नमः । पार्याय नमः । पदात्मकाय नमः । महर्द्धये नमः । महिमाधाराय नमः । महासेनगुरवे नमः । महसे नमः । महाकर्त्रे नमः । महाभोक्त्रे नमः । महासंविन्मयाय नमः । मधवे नमः । महातात्पर्यनिलयाय नमः । प्रत्यग्ब्रह्मैक्यनिश्चयाय नमः । महानन्दाय नमः । महास्कन्दाय नमः । महेन्द्राय नमः । महसांनिधये नमः । (५६०)

महामायाय नमः । महाग्रासाय नमः । महावीर्याय नमः । महाभुजाय नमः । महोग्रताण्डवाभिज्ञाय नमः । परिभ्रमणताण्डवाय नमः । माणिभद्रार्चिताय नमः । मान्याय नमः । मायाविने नमः । मान्त्रिकाय नमः । महते नमः । मायानाटककृते नमः । मायिने नमः । मायायन्त्रविमोचकाय नमः । मायानाट्य विनोदज्ञाय नमः । मायानटनशिक्षकाय नमः । मीढुष्टमाय नमः । मृगधराय नमः । मृकण्डुतनयप्रियाय नमः । मुनये नमः । ५८०

आतार्याय नमः । आलाद्याय नमः । सिकत्याय नमः । किंशिलाय नमः । मोचकाय नमः । मोहविच्छेत्रे नमः । मोदनीयाय नमः । महाप्रभवे नमः । यशस्विने नमः । यजमानात्मने नमः । यज्ञभुजे नमः । यजनप्रियाय नमः.। यक्षराजे नमः । यज्ञफलदाय नमः । यज्ञमूर्तये नमः । यशस्कराय नमः । योगगम्याय नमः । योगनिष्ठाय नमः । योगानन्दाय नमः । युधिष्ठिराय नमः । (६००)

योगयोनये नमः । यथाभूताय नमः । यक्षगन्धर्ववन्दिताय नमः । रविमण्डलमध्यस्थाय नमः । रजोगुणविवर्जिताय नमः । राजराजेश्वराय नमः । रम्याय नमः । रात्रिश्चरविनाशनाय नमः । रातये नमः । दातये नमः । चतुष्पादाय नमः । स्वात्मबन्धहराय नमः। स्वभुवे नमः । रुद्राक्षस्रङ्मयाकल्पाय नमः । कह्लारकिरणद्युतये नमः । रोहिताय नमः । स्थपतये नमः । वृक्षपतये नमः । मन्त्रिणे नमः । वाणिजाय नमः । ६२०

लास्यामृताब्धिलहरी पूर्णेन्दवे नमः । पुण्यगोचराय नमः । वरदाय नमः । वामनाय नमः । वन्द्याय नमः । वरिष्ठाय नमः । वज्रवर्मभृते नमः । वराभयप्रदाय नमः । ब्रह्मपुच्छाय नमः । ब्रह्मविदांवराय नमः । वशिने नमः । वरेण्याय नमः । वितताय नमः । वज्रभृते नमः । वरुणात्मकाय नमः । वह्निमण्डलमध्यस्थाय नमः । वर्षीयसे नमः । वरुणेश्वराय नमः । वाच्यवाचकनिर्मुक्ताय नमः । वागीशाय नमः । ६४०

वागगोचराय नमः । विकाररहिताय नमः । विष्णवे नमः । विराडीशाय नमः । विराण्मयाय नमः । विघ्नेश्वराय नमः । विघ्ननेत्रे नमः । शक्तिपाणये नमः । शरोद्भवाय नमः । विजिघत्साय नमः । विगतभिये नमः । विपिपासाय नमः ।विभावनाय नमः । विदग्धमुग्ध-वेषाढ्याय नमः । विश्वातीताय नमः । विशोकदाय नमः । विद्यानिधये नमः । विरूपाक्षाय नमः । विश्वयोनये नमः । वृषध्वजाय नमः ।(६६०)

विद्युत्याय नमः । विवह्याय नमः । मेध्याय नमः । रेष्मियाय नमः । वास्तुपाय नमः । वसवे नमः । विद्वत्तमाय नमः । विदूरस्थाय नमः । विश्रमाय नमः । वेदनामयाय नमः । वियदादिजगत्स्रष्ट्रे नमः । विविधानन्ददायकाय नमः । विराट्हृदयपद्मस्थाय नमः । विधये नमः । विश्वाधिकाय नमः । विभवे नमः । विरूपाय नमः । विश्वदिग्व्यापिने नमः । वीतशोकाय नमः । विरोचनाय नमः । (६८०)

विश्रान्तिभुवे नमः । विवसनाय नमः । विघ्नहन्त्रे नमः । विनोदकाय नमः । विशृङ्खलाय नमः । वियद्धेतवे नमः । विषमाय नमः । विद्रुमप्रभाय नमः । विश्वस्यायतनाय नमः । वर्याय नमः । वन्दारुजनवत्सलाय नमः । विज्ञानमात्राय नमः । विरजसे नमः । विरामाय नमः । विबुधाश्रयाय नमः । वीरप्रियाय नमः । वीतभयाय नमः । विन्ध्यदर्पविनाशनाय नमः । वीरभद्राय नमः । विशालाक्षाय (७००)

विष्णुबाणाय नमः । विशांपतये नमः । वृद्धिक्षयविनिर्मुक्ताय नमः । विद्योताय नमः । विश्ववञ्चकाय नमः । वेतालनटनप्रीताय नमः । वेतण्डत्वक्कृताम्बराय नमः । वेदवेद्याय नमः । वेदरूपाय नमः । वेदवेदान्तवित्तमाय नमः । वेदान्तकृते नमः । तुर्यपादाय नमः । वैद्युताय नमः । सुकृतोद्भवाय नमः । वेदार्थविदे नमः । वेदयोनये नमः । वेदाङ्गाय नमः । वेदसंस्तुताय नमः । वेलातिलङ्घिकरुणाय नमः । विलासिने नमः । ७२०

विक्रमोन्नताय नमः । वैकुण्डवल्लभाय नमः । अवर्ष्याय नमः । वैश्वानरविलोचनाय नमः । वैराग्यशेवधये नमः । विश्वभोक्त्रे नमः । सर्वोर्ध्वसंस्थिताय नमः । वौषट्काराय नमः । वषट्काराय नमः । हुंकाराय नमः । फट्कराय नमः । पटवे नमः । व्याकृताय नमः ।

व्यापृतयाय नमः । व्यापिने नमः । व्याप्यसाक्षिणे नमः । विशारदाय नमः । व्याघ्रपादप्रियाय नमः । व्याघ्रचर्मधृते नमः । व्याधिनाशनाय नमः ।

व्यामोहनाशनाय नमः । व्यासाय नमः । व्याख्यामुद्रालसत्कराय नमः । व्युप्तकेशाय नमः । विशदाय नमः । विष्वक्सेनाय नमः । विशोधकाय नमः । व्योमकेशाय नमः । व्योममूर्तये नमः । व्योमाकाराय नमः । अव्ययाकृतये नमः । व्रताय नमः । व्रातपतये नमः । विप्रायनमः । वरीयसे नमः । क्षुल्लकाय नमः । क्षमिणे नमः । शक्तिपातकराय नमः । शक्ताय नमः । शाश्वताय नमः ।

श्रेयसांनिधये नमः । शयानाय नमः । शन्तमाय नमः । शान्ताय नमः । शासकाय नमः । श्यामलाप्रियाय नमः । शिवङ्कराय नमः । शिवतराय नमः । शिष्टहृष्टाय नमः । शिवागमाय नमः । शीघ्रियाय नमः । शीभ्याय नमः । आनन्दाय नमः । क्षयद्वीराय नमः । शराय नमः । अक्षराय नमः । शुद्धस्फटिकसङ्काशाय नमः । श्रुतिप्रस्तुत वैभवाय नमः । शुष्क्याय नमः । हरित्याय नमः । (७८०)

लोप्याय नमः । सूर्म्याय नमः । पर्ण्याय नमः । अणिमादिभुवे नमः । शूरसेनाय नमः । शुभाकाराय नमः । शुभ्रमूर्तये नमः । शुचिस्मिताय नमः । शङ्गाय नमः । प्रतरणाय नमः । अवार्याय नमः । फेन्याय नमः । शष्प्याय नमः । प्रवाहजाय नमः । श्राव्याय नमः । शत्रुहराय नमः । शूलिने नमः । श्रुतिस्मृतिविधायकाय नमः । श्रीशिवाय नमः । श्रीशिवानाथाय नमः । ८००

श्रीमते नमः । श्रीपतिपूजिताय नमः । श्रुत्याय नमः । पथ्याय नमः । स्वतन्त्रस्थाय नमः । काट्याय नमः । नीप्याय नमः । करोटिभृते नमः । षडाधारगताय नमः । सांख्याय नमः । षडक्षरसमाश्रयाय नमः । षडूर्मिरहिताय नमः । स्तव्याय नमः । षड्गुणैश्वर्यदायकाय नमः ।

सकृद्विभाताय नमः । संवेत्त्रे नमः । सदसत्कोटिवर्जिताय नमः । सत्वसंस्थाय नमः । सुषुप्तिस्थाय नमः । सुतल्पाय नमः । ८२०

सत्स्वरूपगाय नमः । सद्योजाताय नमः । सदाराध्याय नमः । सामगाय नमः । सामसंस्तुताय नमः । सनातनाय नमः । समाय नमः । सत्याय नमः । सत्यवादिने नमः । समृद्धिदाय नमः । समदृष्टये नमः । सत्यकामाय नमः । सनकादिमुनिस्तुताय नमः । समस्तभुवनव्यापिने नमः । समृद्धाय नमः । सततोदिताय नमः । सर्वकृते नमः । सर्वजिते नमः । सर्वमयाय नमः । सत्वावलम्बकाय नमः । ८४०

सर्वद्वन्द्वक्षयकराय नमः । सर्वापद्विनिवारकाय नमः । सर्वदृशे नमः । सर्वभृते नमः । सर्गाय नमः । सर्वहृत्कोशसंस्थिताय नमः । सर्वप्रियतमाय नमः । सर्वदारिद्र्यक्लेशनाशनाय नमः । सर्वविद्यानामीशनाय नमः । ईश्वराणामधीश्वराय नमः । सर्वज्ञाय नमः । सर्वदाय नमः । स्थाणवे नमः । सर्वेशाय नमः । समरप्रियाय नमः । सर्वातीताय नमः । सारतराय नमः । साम्बाय नमः । सारस्वतप्रदाय नमः । सर्वार्थाय नमः । ८६०

सर्वदातुष्टाय नमः । सर्वशास्त्रार्थसंमताय नमः । सर्वेश्वराय नमः । सर्वसाक्षिणे नमः । सर्वात्मने नमः । साक्षिवर्जिताय नमः । सव्यताण्डवसंपन्नाय नमः । महाताण्डववैभवाय नमः । सस्पिञ्जराय नमः । पशुपतये नमः । त्विषीमते नमः । अध्वनां पतये नमः । सह्मानाय नमः । सत्यधर्मणे नमः । निर्व्याधिने नमः । नियमाय नमः । यमाय नमः । सहस्राक्षाय नमः । सहस्रांघ्रये नमः । सहस्रवदनाम्बुजाय नमः । ८८०

सहस्राक्षार्चिताय नमः । सम्राजे नमः । सन्धात्रे नमः । संपदालयाय नमः । सिद्धेशाय नमः । सिद्धिजनकाय नमः ।

सिद्धान्ताय नमः । सिद्धवैभवाय नमः । सुधारूपाय नमः । सुराध्यक्षाय नमः । सुभ्रुवे नमः । सुखघनाय नमः । सुधिये नमः । सुनिश्चितार्थाय नमः । राद्धान्ताय नमः । तत्त्वमर्थाय नमः । तपोमयाय नमः । सुव्रताय नमः । सत्यसंकल्पाय नमः । स्वसंवेद्याय (९००)

सुखावहाय नमः । सूताय नमः । सदस्पतये नमः । सूरये नमः । अहन्त्याय नमः । वनपाय नमः । वराय नमः । सूत्रभूताय नमः । स्वप्रकाशाय नमः । समशीलाय नमः । सदादयाय नमः । सूत्रात्मने नमः । सुलभाय नमः । स्वच्छाय नमः । सूदराय नमः । सुन्दराननाय नमः । सूद्याय नमः । सरस्याय नमः । वैशन्ताय नमः । नाद्याय नमः । ९२०

अवट्याय नमः । वर्षकाय नमः । सूक्ष्मात्सूक्ष्मतराय नमः । सूर्याय नमः । सूक्ष्मस्थूलत्ववर्जिताय नमः । सृकाविणे नमः । मुष्णतां नाथाय नमः । पञ्चाशद्वर्णरूपभृते नमः । सोममण्डलमध्यस्थाय नमः। सोमाय नमः। सौम्याय नमः । सुहृद्वराय नमः । संकल्पोल्लासनिर्मुक्ताय नमः। समनीरागचेतनाय नमः । संपन्नाय नमः । सङ्क्रमाय नमः । सत्रिणे नमः । सन्दात्रे नमः । सकलोर्जिताय नमः । संप्रवृद्धाय नमः ।९४०

सन्निकृष्टाय नमः । संविमृष्टाय नमः । समग्रदृशे नमः । संप्रहृष्टाय नमः । सन्निविष्टाय नमः । संस्पष्टाय नमः । संप्रमर्दनाय नमः । संयद्वामाय नमः । संयमीन्द्राय नमः । संशयच्छिदे नमः । सहस्रदृशे नमः । संयमस्थाय नमः । संहृदिस्थाय नमः । संप्रविष्टाय नमः । समुत्सुकाय नमः । संवत्सराय नमः । कलापूर्णाय नमः । सुरासुरनमस्कृताय नमः । संवर्ताग्न्युदराय नमः । सर्वान्तरस्थाय नमः । ९६०

सर्वदुर्गहाय नमः । संशान्तसर्वसंकल्पाय नमः । संसदीशाय नमः । सदोदिताय नमः । स्फुरड्डमरुनिध्वाननिर्जितांभोनिधिस्वनाय नमः । स्वच्छन्दाय नमः । स्वच्छसंवित्तये नमः । अन्वेष्टव्याय नमः । अश्रुताय नमः । अमताय नमः । स्वात्मस्थाय नमः । स्वायुधाय नमः । स्वामिने नमः । स्वानन्याय नमः । स्वांशिताखिलाय नमः । स्वाहारूपाय नमः । वसुमनसे नमः । वटुकाय नमः । क्षेत्रपालकाय नमः । हिताय नमः । ९८०

प्रमात्रे नमः । प्राग्वर्तिने नमः । सर्वोपनिषदाशयाय नमः । हिरण्यबाहवे नमः । सेनान्ये नमः । हरिकेशाय नमः । दिशांपतये नमः । हेतुदृष्टान्तनिर्मुक्ताय नमः । हेतवे नमः । हेरम्बजन्मभुवे नमः । हेयोपादेयनिर्मुक्ताय नमः । हेलाकलितताण्डवाय नमः । हेलाविनिर्मितजगते नमः । हेमश्मश्रवे नमः । हिरण्मयाय नमः । ज्ञानलिङ्गाय नमः । गतये नमः । ज्ञानिने नमः । ज्ञानगम्याय नमः । अवभासकाय (१०००)

श्री कुञ्चितपादसहस्रनामावलिः समाप्ता ।

# श्रीनटेशपञ्चशाती

ओं....नमः

ओङ्कारपरमार्थैकभवनाय नमो नमः ।
चिदम्बरसभानन्दनृत्ताङ्गाय नमो नमः ।
विराट्हृदय पद्मस्थ सभेशाय नमो नमः ।
सच्चिदानन्दसंपूर्ण चिद्घनाय नमो नमः ।
चिदाकाशपरंज्योतिस्स्वरूपाय नमो नमः ।
परात्परपरब्रह्ममूर्तये ते नमो नमः ।
अवाङ्मानस चारित्रवैभवाय नमो नमः ।
व्यक्ताव्यक्तपरंतत्वप्रतिष्ठात्रे नमो नमः ।
समस्तजगदाधाराव्याकृते ते नमो नमः ।
महाकैलास शिखर नित्यस्थाय नमो नमः । १०
2पतञ्जलिसुसन्दष्ट परमाय नमो नमः ।
त्रिचत्वारिंशत्कोणश्रीचक्राङ्गाय नमो नमः ।
संमेलनसभायन्त्रमध्यनृत्ताय ते नमः ।
सभानट महाविद्यार्णाकाराय नमो नमः ।
सदानन्दमयीरूपचिन्मयाय नमो नमः ।
सहस्राक्षरसद्विद्यासुपूज्याय नमो नमः ।
भानुकोटि प्रकाशान्त मन्दिराय नमो नमः ।
सहस्रस्तंभसंयुक्त मण्टपाय नमो नमः ।
स्वशक्त्यादिमहाशक्त्यासनस्थाय नमो नमः ।
शिवकामसुन्दरीश्रीवल्लभाय नमो नमः । २०
सामीकलत्रभागात्तशरीराय नमो नमः ।
हिमशैलेन्द्रतनयालिङ्गिताय नमो नमः ।

विलसद्दिव्यकर्पूरगौराङ्गाय नमो नमः ।
कन्दर्पायुत सङ्काशलावण्याय नमो नमः
बहुनूत्नार्कसदृशविमानाय नमो नमः ।
इन्दिरारमणप्रीत सुन्दराय नमो नमः ।
अखण्डसच्चिदानन्द नादान्ताय नमो नमः ।
सुरत्नखचित स्वर्णकिरीटाय नमो नमः ।
अशेषाण्डस्यूत जटामण्डलाय नमो नमः ।
अनूपमसुलावण्यस्वदेहाय नमो नमः ।३०
सदा मुदानन्द सुधार्णमग्नाय नमो नमः ।
परमानन्द चिद्रूपप्रकाशाय नमो नमः ।
इच्छाज्ञानक्रियाशक्ति सन्नुताय नमो नमः ।
तप्तकाञ्चनसंकाशजटारण्याय ते नमः ।
मणिसुन्दरमन्दारमौलिबद्धाय ते नमः ।
पिञ्छालंकृतहेमाभकपर्दाय नमो नमः ।
वियद्गंगांबुपूर्णाभमूर्धजाय नमो नमः ।
गंगाकल्लोलद्रोणीन्दुमस्तकाय नमो नमः ।
चारुशीतांशुशकलशेखराय नमो नमः ।
त्रिपुण्ड्रविलसत्फालफलकाय नमो नमः ।४०
त्रिपथत्रिदशाकारत्रिणेत्राय नमो नमः ।
दक्षिणाभिमुखांभोजविमलाय नमो नमः ।
सोमपावकमार्ताण्ड लोचनाय नमो नमः ।
कर्णपूरोत्पलस्पर्धि स्वीक्षणाय नमो नमः ।
वासुकी तक्षकलसत्कुण्डलाय नमो नमः ।
तमालश्यामलाकारकर्णिकाय नमो नमः ।
मुख्य भस्मांकितस्मेरवदनाय नमो नमः ।

कामकार्मुकसौन्दर्य हसनाय नमो नमः ।
शंखवृत्तमृदुस्निग्घ कन्धराय नमो नमः ।
जाजीमन्दाररुचिर ग्रैवेयाय नमो नमः । ५०
अमृताब्धि समुद्भूत श्रीकण्ठाय नमो नमः ।
विधिशीर्षालिसंबद्ध सुहाराय नमो नमः ।
ज्वलदग्नि लसत्पाणि पल्लवाय नमो नमः ।
कराब्जधृत कालाग्निज्वलनाय नमो नमः ।
मार्गाधिर्मप्रवृत्तानां अधः कर्त्रे नमो नमः ।
मुक्ति सूचिसव्यवीज हस्ताब्जाय नमो नमः ।
डमड्डुमरुवाद्यूर्ध्वदक्षहस्ताय ते नमः ।
सदाऽभयप्रदकरसारसाय नमो नमः ।
विजयश्रीलसद्बाहुमण्डलाय नमो नमः ।
अनेकरत्नसञ्छन्नसुहाराय नमो नमः । ६०
मौक्तिकस्वर्णरुद्राक्षमालिकाय नमो नमः ।
अम्लानदिव्यकुन्दादिलम्बनाय नमो नमः ।
विद्युन्नागोपवीताभमहोरस्काय ते नमः ।
मृगमातङ्ग हर्यक्षत्वग्धराय नमो नमः ।
व्याघ्रचर्मोत्तरीयांससुन्दराय नमो नमः ।
ह्रीमादिजप्तमन्त्रात्तसुहृदे ते नमो नमः ।
रत्नकौशेयसंवीत कटिदेशाय ते नमः ।
सौदामिनी सुमच्छायसुवस्त्राय नमो नमः ।
सुवर्णरत्नसिञ्जान शृङ्खलाय नमो नमः ।
प्रालंबिसुद्दढोल्लग्रभूषणाय नमो नमः । ७०
तिलप्रसूनहेमांगाभरणाय नमो नमः ।
तटिल्लसदुरःसूत्रालंकृताय नमो नमः ।

कटीतटलसत्सर्पाशावासाय नमो नमः ।
सौवर्णकिंकिणीयुक्त कटिस्थाय नमो नमः ।
शिञ्जानमणिमञ्जीर कुञ्चितांघ्रे नमो नमः ।
लीलयोद्धृतवामांघ्रिवामनाय नमो नमः ।
कृपयात्तात्ममायापस्मारस्थाय नमो नमः ।
अशेषदेवताराध्यपादुकाय नमो नमः ।
धगद्धगित रत्नाच्छपादुकाय नमो नमः ।
मदमुदितमदनदमनाय नमो नमः । ८०

यमुनानुजभवन शमनाय नमो नमः ।
विशेषपादुकाराध्य सिद्धिदात्रे नमो नमः ।
चक्राब्जरेखायुक्तांघ्रि पङ्कजाय नमो नमः ।
त्रिसाहस्रद्विजेन्द्रार्च्य पदाब्जाय नमो नमः ।
गारुडोपलगांभीर्यपादुकाय नमो नमः ।
सूक्ष्मघण्टामणिप्रोत नूपुराय नमो नमः ।
वटपत्रसमाकारसूदराय नमो नमः ।
काकोदर फणारत्नग्रैवेयाय नमो नमः ।
ब्रह्मबृन्दकपालालिमालिकाय नमो नमः ।
शुण्डादण्डवदाकार वीजहस्ताय ते नमः । ९०

रत्नाङ्गुलीयविलसत् हस्ताब्जाय नमो नमः ।
सर्वलक्षणसंपन्न सुमुखाय नमो नमः ।
प्रवालाधर विकसत्सुस्मिताय नमो नमः ।
अतिशीतल चन्द्राहि शेखराय नमो नमः ।
हरिन्मणिनिभस्वेच्छवामार्धाय नमो नमः ।
स्वच्छाच्छ स्फटिकाकार सव्यार्धाय नमो नमः ।

सर्वालङ्कारसंयुक्त सर्वाङ्गाय नमो नमः ।
भवानी स्मितमाधुर्य वीक्षणाय नमो नमः ।
बिल्वोत्तमाङ्ग सौन्दर्य मुखाब्जाय नमो नमः ।
हीरसार त्रिपुण्ड्राङ्क मस्तकाय नमो नमः ।। १००
विवृत्तोद्यद्धीरकान्ति दन्तपंक्त्यै नमो नमः ।
बहिरन्ताखिलाण्डालि भास्कराय नमो नमः ।
देवीपरिणयाकार मङ्गलाय नमो नमः ।
नृत्ताटोपेक्षणोमार्ध विग्रहाय नमो नमः ।
उमाश्लिष्टाङ्गविलसद् दिव्याङ्गाय नमो नमः ।
उमाक्षीन्दीवर सुमाहस्कराय नमो नमः ।
गुहमत्तेभवदनजनकाय नमो नमः ।
श्रीवाणीविधिविष्णिवन्द्र यजनाय नमो नमः ।
महामन्त्रमहायन्त्रायतनाय नमो नमः ।
शिवानन्द परज्योतिर्ज्वलनाय नमो नमः । ११०
धर्माकृति वृषश्रेष्ठवाहनाय नमो नमः ।
मोक्षरूपवृषेन्द्रस्व केतनाय नमो नमः ।
वृषध्वजावृतार्कादिमण्डलाय नमो नमः ।
सर्वंसहा महद्दिव्यस्यन्दनाय नमो नमः ।
सुधांशुभास्कराकाररथाङ्गाय नमो नमः ।
ऋग्यजुस्सामाथर्वात्त तुरगाय नमो नमः ।
सारथीभूतवैरिञ्चिविनुताय नमो नमः ।
सुरारिवैरिज्वलनमार्गणाय नमो नमः ।
चामीकरमहाशैलकार्मुकाय नमो नमः ।
ज्याभूतादिशेषबद्ध सुधन्वने नमो नमः । १२०

हास्यभस्मी कृताशेष त्रैपुराय नमो नमः ।
स्तंबेरघोरदैतेय दारणाय नमो नमः ।
सनकादिसमाराध्ययोगेशाय नमो नमः ।
शोकमोहरोगतिग्म विदूराय नमो नमः ।
प्रारब्धजन्ममरण क्षणहन्त्रे नमो नमः ।
चिद्घनानन्दसन्दोहगुहान्ताय नमो नमः ।
निरन्तरानन्दसुखसंविद् दात्रे नमो नमः ।
कैवल्यशुद्धसन्मार्ग संपद्दात्रे नमो नमः ।
अनन्तवेदवेदान्तसंहृदे ते नमो नमः ।
रत्नसोपान संबद्ध सभान्ताय नमो नमः । १३०
नयनानन्दजनकनर्तनाय नमो नमः ।
नादबिन्दुकलान्तात्मस्वरूपाय नमः ।
पूर्णानन्दैकविज्ञानपरमाय नमः ।
तापत्रयातीतमहाताण्डवाय नमः ।
सशिवानन्दसायुज्य सिद्धिदाय नमः ।
सत्सन्तानादि सौभाग्य निचयाय नमः ।
अज्ञानतिमिरभ्रान्तिध्वं सकाय नमः ।
आदिमध्यान्तरहितस्थाणवे ते नमः ।
मायामयमहामोहविनिर्भेत्त्रे नमः ।
पयोऽष्ट(पयस्स्थ) घृतवत्प्राज्ञविदिताय नमः । १४०
पुत्रमित्र कलत्रादिबन्धहर्त्रे नमो नमः ।
बहिरन्तसुकृत्सौख्य वृद्धिदात्रे नमो नमः ।
दंभाहङ्कार दर्पाल्पगर्वघ्नाय नमो नमः ।
ऐहिकामुष्मिकसुखाद्यसङ्गाय नमो नमः ।
तृणीकृताशापपदत्रिसाहस्राय ते नमः

प्रणवैकस्मृतिपरदिदृक्षाय नमो नमः
कृतनिन्दास्तुतानन्दमानसाय नमो नमः ।
ज्योतिर्मय शिवालिङ्गाम्रनाथाय नमो नमः ।
फणिराडाच्छादितास्य पञ्चकाय नमो नमः ।
सर्वतोमुखदीप्तेन्दु शेखराय नमो नमः । १५०
गङ्गांबुग्रथितजटाकलापाय नमो नमः ।
महाहीरक मकुटाभरणाय नमो नमः ।
निजाक्षिजाग्निसन्दग्धमन्मथाय नमो नमः ।
भस्मीकृतस्मरोज्जीववीक्षणाय नमो नमः ।
कामाक्षीसुदृढाश्लिष्टयुग्मवक्षोभृते नमः ।
स्वशरीरार्धदृग्वेणीनारीदात्रे नमो नमः ।
नीलेन्दीवरनीकाशवामार्धाय नमो नमः ।
निजास्यनेत्रसंभूतकुमाराय नमो नमः ।
सुवीक्षित शिवार्धांश ताण्डवाय नमो नमः ।
उत्फुल्लरत्नकमलसहस्राच्यार्य ते नमः । १६०
राजीवाक्षार्पिताब्जाभलोचनाय नमो नमः ।
वैकुण्ठाधिपविष्ण्वाख्य पददात्रे नमो नमः ।
भावनामात्रसन्तुष्टवरदाय नमो नमः ।
तत्वातीतगुणातीत स्वरूपाय नमो नमः ।
अप्राकृतमहादेवीपरस्थाय नमो नमः ।
दारुकावन मौनिस्त्रीमोहिताय नमो नमः ।
कृताभिचार किञ्चिज्ज्ञतापसाय नमो नमः ।
व्याघ्राहिवह्न्यपस्मार सेविताय नमो नमः ।
वैष्णवीमोहिनी दृष्ट नटनाय नमो नमः ।
जलन्धरासुरशिरश्छेदनाय नमो नमः । १७०

मार्कण्डेयाश्लिष्टशिवलिङ्गमूर्ते नमो नमः ।
एतद्भक्ताकृष्ट मृत्युमथनाय नमो नमः ।
दक्षांघ्रिघात शमितशमनाय नमो नमः ।
मार्कण्डेयमनोऽभीष्ट सिद्धिदाय नमो नमः ।
दक्षयज्ञध्वंसवीरभद्रमूर्ते नमो नमः ।
बलान्धकासुरप्राणजिघृक्षाय नमो नमः ।
शूलस्यूतान्धकस्तोत्रप्रार्थिताय नमो नमः ।
गाणाधिपेन्द्र साम्राज्य पद दात्रे नमो नमः ।
विखण्डिताजपश्चास्यनखराय नमो नमः ।
मुरारिनेत्रपूज्यांघ्रिपङ्कजाय नमो नमः । १८०
कुठारनासिदैतैय दारणाय नमो नमः ।
झलञ्झलितलोकालि नूपुराय नमो नमः ।
भक्तियुक्तक्षुल्लकादि स्वीकृताय नमो नमः ।
बिल्वकाष्ठचन्दनाति सुप्रियाय नमो नमः ।
वन्य पुष्पपत्रफलामोदिताय नमो नमः ।
वसन्तप्रमुखानेकऋतुभ्यस्ते नमो नमः ।
भक्तहृत्पद्मसुलभ दर्शनाय नमो नमः ।
औदारांभोधिमध्यस्थकृपारत्नाय ते नमः ।
अपस्मारोपरि क्षुण्ण दक्षिणांघ्रे नमो नमः ।
दक्षपादांगुलिन्यस्त दशकण्ठाय ते नमः । १९०
चराचराशेषलोकशरण्याय नमो नमः ।
अधःकृततमोरूपघोरणाय नमो नमः ।
समस्तजगदाधार चिद्घनाय नमो नमः ।
दुःखजन्मजरामृत्युनाशनाय नमो नमः ।
धर्मार्थकाममोक्षादि फलदाय नमो नमः ।

उत्पत्तिस्थितिकर्त्रादिजनकाय नमो नमः ।
चराचरजगन्मध्य साक्षिभूत्यै नमो नमः ।
पिपीलिकादिदेव्यन्तहृदिष्ठाय नमो नमः ।
क्रन्दत्स्तनन्धयक्रोडस्तन्य दात्रे नमो नमः ।
नारसिंहासुहृत्प्रीतशरभाय नमो नमः । २००
एवमादिस्वभूगर्व भञ्जनाय नमो नमः ।
एवमादिसुरेन्द्रात्तगर्व हर्त्रे नमो नमः ।
महाकल्पान्तप्रलयभैरवाय नमो नमः ।
परमानन्दसंपूर्णस्वात्मस्थाय नमो नमः ।
परप्रकाशानन्दनाथसत्यज्ञाय नमो नमः ।
महापातकतूलौघ पावकाय नमो नमः ।
आपाता लोर्ध्वसंक्रान्त स्वरूपाय नमो नमः ।
अनाद्यन्तस्वप्रणवनिरूपाय नमो नमः ।
आदिमानन्द विज्ञानसंवेद्याय नमो नमः ।
सप्तकोटिमहामन्त्रप्रतीकाय नमो नमः । २१०
कोटिकोटिमहामन्त्र स्वरूपाय नमो नमः ।
सर्वमन्त्रमयान्ताप्तसिद्धिदाय नमो नमः ।
स्वरसंप्राप्तगीर्वाण भूषणाय नमो नमः ।
अनन्तानन्द सञ्जात संविद् दात्रे नमो नमः ।
नमितानन्द सन्दोह ज्ञानदाय नमो नमः ।
भक्तभक्ति प्रसन्ना त्मवैभवाय नमो नमः ।
अतुलोदार सौहार्दवामाज्ञाय नमो नमः ।
स्वरत्र्यक्षरसंयुक्त नृत्तवेद्यै नमो नमः ।
अनन्तमहिमाराव सुनादाय नमो नमः ।
अचिन्त्यानन्तमाहात्म्यतात्पर्याय नमो नमः । २२०

अप्रमेयात्म चारित्र पुराणाय नमो नमः ।
मुदा हृदंबुजावासनटराजे नमो नमः ।
प्रणवार्थ सभानाथ परस्मै ब्रह्मणे नमः ।
पराशक्तिसमायुक्त परेशाय नमो नमः ।
परब्रह्ममयोंकारमन्त्रार्थाय नमो नमः ।
सहस्रनामजापीष्ट फलदाय नमो नमः ।
त्रिसहस्रद्विजेन्द्राद्यकूटस्थाय नमो नमः ।
त्रिकूटशृङ्ग विलस त्सभेशाय नमो नमः ।
श्रीयन्त्र शिवशक्त्यैक्य नर्तिने ते नमो नमः ।
परमानन्दनटन विनोदाय नमो नमः । २३०
कोमलालोलनृत्तेक्षमोहनाय नमो नमः ।
वामगामश्रु वीक्षण्यासेचनाय नमो नमः ।
ओङ्कार लिङ्ग मूर्ध्यूर्ध्व निवासाय नमो नमः ।
भ्रूमध्यलिङ्ग हृत्पद्म निलयाय नमो नमः ।
श्रीमत्पञ्चार्णसोपान सभान्ताय नमोनमः ।
चिदम्बरमहायन्त्रविलासाय नमो नमः ।
नादबिन्दु कलाहंसचित्पराय नमो नमः ।
मुक्तिमार्गद्योत घण्टाऽऽरागाराय नमो नमः ।
ज्वलितध्वनिमन्त्रौघ प्रभान्ताय नमो नमः ।
चतुस्स्तंभार्षेयमध्य निगूढाय नमो नमः । २४०
षट्शास्त्रस्तंभयुक् श्रीशपीठस्थाय नमो नमः ।
वैरिञ्चिविष्णुरुद्रेशासनस्थाय नमो नमः ।
उन्मनीस्थान निवसदुत्तमाय नमो नमः ।
द्वादशान्तपदावास व्योमस्थाय नमो नमः ।
सर्वशान्त निरालम्बशाश्वताय नमो नमः ।

मनोवचोभिरग्राह्य पूरणाय नमो नमः ।
पूर्णात्पूर्ण शिवानन्द परोक्षाय नमो नमः ।
माहेशोपरि विन्यासनृत्तेशाय नमो नमः ।
सदाशिवोपरिव्योमनटेशाय नमो नमः ।
मायायवनिकाच्छन्न रहस्याय नमो नमः । २५०
चिन्तामणिमहामन्त्रनिजाज्ञाय नमो नमः ।
षोडशी मन्त्र युक्तश्रीचक्रान्ताय नमो नमः ।
सदा शैलादिसन्दृष्टसभेशाय नमो नमः ।
अकाराद्यक्षरारंभनामार्थाय नमो नमः ।
भक्तिगम्यानन्तरूपप्रकाशाय नमो नमः ।
ओं नमस्त इषवे रुद्र धन्वने ते नमः ।
नमस्ते मन्यवे रुद्र बाहुभ्यां ते नमो नमः ।
नीलग्रीवाय सदय सहस्राक्षाय ते नमः ।
नमस्ते मीढुषे तुभ्यमायुधाय नमो नमः ।
नमस्ते धृष्णवे भर्ग हिरण्यबाहवे नमः । २६०
दिशां च पतये शर्व सेनान्ये ते नमो नमः ।
सस्पिञ्जराय सर्वेश पशूनां पतये नमः ।
त्विषीमते पथीनां च पतये ते नमो नमः ।
विव्याधिने बभ्लुशायाप्यन्नानां पतये नमः ।
उपवीतिंने नमस्तुभ्यं हरिकेशाय ते नमः ।
पुष्टानां पतये तुभ्यं भवस्य हेत्यै नमः ।
जगतां पतये तुभ्यं रुद्रायाथ नमो नमः ।
नम्राततविनेशान क्षेत्राणां पतये नमः ।
सूताय चाथाहन्त्याय वनानां पतये नमः ।
रोहिताय स्थपतये वृक्षाणां पतये नमः । २७०

मन्त्रिणे वाणिजायाथ कक्षाणां पतये नमः ।
भुवन्तये नमो वारिवस्कृताय नमो नमः ।
ओषधीनां च पतये चोच्चैर्घोषाय ते नमः ।
सन्ततं चाक्रन्दयते पत्तीनां पतये नमः ।
धावते कृत्स्नवीताय सत्वनां पतये नमः ।
निव्याधिने नमस्तुभ्यं सहमानाय ते नमः ।
आव्याधिनीनां पतये ककुभाय नमो नमः ।
निषङ्गिणेऽथ स्तेनानां पतये ते नमो नमः ।
नमस्ते चेषुधिमते निषङ्गिणे नमो नमः ।
तस्कराणां च पतये वञ्चते ते नमो नमः । २८०
परिवञ्चते च स्तायूनां पतये ते नमो नमः ।
नमो निचेरवे परिचराय ते नमो नमः ।
अरण्यानां च पतये मुष्णतां पतये नमः ।
उष्णीषिणे प्रकृन्तानां पतये ते नमो नमः ।
गिरिचराय कुलुञ्चानां पतये ते नमो नमः ।
नमो भवाय शर्वाय रुद्राय च नमो नमः ।
नीलग्रीवायाथ पशुपतये ते नमो नमः ।
कपर्दिने नमो भीम शितिकण्ठाय ते नमः ।
नमस्ते व्युप्तकेशाय सहस्राक्षाय ते नमः ।
शतधन्वने नमस्तुभ्यं गिरिशाय नमो नमः । २९०
मीढुष्टमायाथ शिपिविष्टायेषुमते नमः ।
ह्रस्वाय वामनायोग्र बृहते च नमो नमः ।
वर्षीयसे च वृद्धाय संवृध्वने नमो नमः ।
प्रथमायाग्रियायाशवेऽजिराय नमो नमः ।

शीघ्रियाय च शीभ्याय तुभ्यमूर्म्याय ते नमः ।
स्रोतस्यायावस्वन्याय द्वीप्याय च नमो नमः ।
ज्येष्ठाय च कनिष्ठाय पूर्वजाय नमो नमः ।
नमश्चापरजायाथ मध्यमाय नमो नमः ।
जघन्यायापगल्भ्याय बुध्नियाय नमो नमः ।
सोभ्याय प्रतिसर्याय याम्याय च नमो नमः । ३००
उर्वर्याय च क्षेम्याय खल्व्याय च नमो नमः ।
श्लोक्याय चावसान्याय वन्याय च नमो नमः ।
प्रतिश्रवाय कक्ष्याय श्रवायाथ नमो नमः ।
शूरायाशुरथायाथाशुषेणाय नमो नमः ।
वरूथिनेऽवभिन्दते वर्मिणे च नमो नमः ।
बिल्मिने च कवचिने च श्रुताय च नमो नमः ।
सततं श्रुतसेनाय दुन्दुभ्याय नमो नमः ।
धृष्णवे चाहनन्याय प्रमृशाय नमो नमः ।
दूताय प्रहितायाथ निषङ्गिणे नमो नमः ।
नमस्तीक्ष्णेषवे चेषुधिमत आयुधिने नमः । ३१०
सुधन्वने स्वायुधाय स्रुत्याय च नमो नमः ।
पथ्याय चाथ काट्याय नीप्याय च नमो नमः ।
सूद्याय च सरस्याय नाद्याय च नमो नमः ।
वैशन्ताय च कूप्याय चावट्याय नमो नमः ।
अवर्ष्याय च वर्ष्याय मेध्याय च नमो नमः ।
विद्युत्यायेद्ध्रियायाथ चातप्याय नमो नमः ।
वात्याय रेष्मियायाथ वास्तव्याय नमो नमः ।
नमस्ते ते वास्तुपाय नमस्ते ते नमो नमः ।

नमस्सोमाय रुद्राय ताम्राय च नमो नमः ।
नमश्शङ्गायारुणाय पशुपतये ते नमः । ३२०
भीमाय चोग्राय चाग्रेवधाय च नमो नमः ।
दूरे वधाय हन्त्रे च हनीयसे नमो नमः ।
मयोभवे शंभवे च ताराय ते नमो नमः ।
मयस्कराय च नमः शङ्कराय नमो नमः ।
नमः शिवाय च शिव तराय च नमो नमः ।
नमस्तीर्थ्याय कूल्याय पार्याय च नमो नमः ।
प्रतरणाय च नमश्चावार्याय नमो नमः ।
नमश्चोत्तरणायाथ चातार्याय नमो नमः ।
आलाद्याय च शष्प्याय फेन्याय च नमो नमः ।
सिकत्याय प्रवाह्याय चेरिण्याय नमो नमः । ३३०
किंशिलाय क्षयणाय प्रपथ्याय नमो नमः ।
पुलस्तये च गोष्ठ्याय गृह्याय च नमो नमः ।
कपर्दिने च तल्प्याय गेह्याय च नमो नमः ।
नमस्ते गह्वरेष्ठाय हृदय्याय नमो नमः ।
पांसव्याय रजस्याय निवेष्प्याय नमो नमः ।
शुक्त्याय च हरित्याय लोप्याय च नमो नमः ।
उलप्यायाथ चोर्व्याय सूर्म्याय च नमो नमः ।
नमः पर्ण्याय ते पर्णशद्याय च नमो नमः ।
नमोऽपगुरमाणायाभिघ्नते ते नमो नमः ।
आःखिदते नमस्तुभ्यं प्रःखिदते ते नमो नमः । ३४०
जीवसे तवसे तुभ्यं क्षयद्वीराय ते नमः ।
चतुष्पदे च द्विपदे चायजे ते नमो नमः ।

तनये ते च गोघ्ने च पुरुषघ्ने नमो नमः ।
प्रचेतसे कद्रु द्राय मीळ्हुष्टमाय ते नमः ।
तव्यसे च नमस्तुभ्यं भवातोकाय ते नमः ।
पित्रे मात्रे च भ्रात्रेऽथ कर्त्रे हर्त्रे नमो नमः ।
नमः स्थिरधन्वने च क्षिप्रेषवे नमो नमः ।
देवायाथ स्वधाव्ने च प्याषाळ्हाय नमो नमः ।
वेधसे सहमानाय तिग्मायुधाय नमो नमः ।
सत्वने च नमस्तुभ्यं पुरुहूताय वै नमः ।।
नमोऽधिपतये मित्रपतये ते नमो नमः ।
क्षत्रपताय च नमः स्वःपताय नमो नमः ।
धनपताय च नमः सर्वाधिपतये नमः ।
नमोऽन्नपतये तुभ्यं एकाक्षाय नमो नमः ।
रुद्रायावपन्नादाय दीरसदे नमो नमः ।
नमः स्थिराय च स्थिरधन्वने ते नमोनमः ।
नमः प्रतिपदायाथ पटरिणे नमो नमः ।
नमस्त्रियंबकाय कपर्दिने च नमो नमः ।
भवाशर्वौ नमः प्रतीचीनाय ते नमो नमः ।
क्रन्दाय ते नमस्तुभ्यं प्राणाय ते नमो नमः ।
अमर्त्य ते नमस्तुभ्यं सहस्राक्षाय ते नमः ।
मुखाय ते नमस्तुभ्यं चक्षूंषि ते नमो नमः ।
त्वचे रूपाय सन्दृशे तेऽङ्गेभ्यस्ते नमो नमः ।
उदराय ते जिह्वाया आस्याय ते नमो नमः ।
दद्भ्यो नमस्ते गन्धाय विघसे ते नमो नमः ।
तस्यै नमो भवारुद्रौ उभावुग्रौ नमो नमः ।

आयते ते नमस्तुभ्यं परायते नमो नमः ।
तिष्ठते ते नमस्तुभ्यं आसीनाय नमो नमः ।
ताभ्यां नमो नमः सायं प्राताराज्यै नमो नमः ।
दिवा नमो भवाय च शर्वाय च नमो नमः । ३७०
अस्मै नमोऽप्स्वन्तस्तुभ्यं तस्मै तुभ्यं नमो नमः ।
मृडाय यजमानाय पशूनां पतये नमः ।
महास्येभ्यश्च ते श्वभ्यो घोषिणीभ्यश्च ते नमः ।
केशिनीभ्यश्च ते तुभ्यं नमस्कृताभ्यस्ते नमः ।
नमस्ते संभुञ्जतीभ्यो देवसेनाभ्यस्ते नमो नमः ।
श्रुत्यन्तसर्वविद्यानां ईशानाय नमो नमः ।
सहस्राक्षांघ्रिशिरस्तत्पुरुषाय नमो नमः ।
घोराय दुष्टवृत्तीनां शिष्टाघोराय ते नमः ।
घोरासुरमरुद्धन्त्रे चाघोराय नमो नमः ।
वामदेवाय ज्येष्ठाय श्रेष्ठाय च नमो नमः । ३८०
नमो रुद्राय कलविकरणाय नमो नमः ।
नमः कालाय बलविकरणाय नमो नमः ।
नमो बलाय बलप्रमथनाय नमो नमः ।
सर्वभूतद मनाय मनोन्मनाय ते नमः ।
बहिरन्तः सदा ध्यातृ सद्यो जाताय वै नमः ।
भवे भवेऽनातिभवे भवस्व प्रभवे नमः ।
भवोद्भव भूतभव्य भविष्यद्भ्यो नमो नमः ।
भवोद्भवाय भव्याय भूताय भाविने नमः ।
प्रशस्तान्नमय प्राणभूतात्मब्रह्मणे नमः ।
निवृत्तिपायुभूगन्धब्रह्मणे ते नमो नमः । ३९०

समान घ्राणकरण भवे भवे नमो नमः ।
प्रतिष्ठोदान चिन्नीर वामदेवाय ते नमः ।
जिह्वोपस्थ विष्णुरस मनोन्मनाय ते नमः ।
व्यानचक्षू रुद्ररूपघोराय ते नमो नमः ।
वागहङ्कारविद्याऽथ घोरेभ्योऽथ नमो नमः ।
शान्त्यपान बुद्धिपाणिपुरुषाय नमो नमः ।
त्वक्स्पर्शवाय्वनन्तेश महादेवाय ते नमः ।
शान्त्यतीत प्राणमनईश्वराय नमो नमः ।
श्रोत्रपादाकाशशब्द ईशानाय नमो नमः ।
सदाशिव परामोद विद्येशाय नमो नमः । ४००

ब्रह्माधिपतये नित्यं ब्रह्मणे ते नमो नमः ।
ऋतं सत्यं परं ब्रह्म पुरुषं ते नमो नमः ।
कृष्णपिङ्गलवर्णाढ्यस्वरूपाय नमो नमः ।
ऊर्ध्वरेतो विरूपाक्ष विश्वरूप नमो नमः ।
निगमान्तसमुद्गीत रहस्याय नमो नमः ।
कर्मज्ञानेन्द्रियातीत प्रज्ञान ब्रह्मणे नमः ।
अहं ब्रह्मास्मि तत्वार्थ दर्शयित्रे नमो नमः ।
तत्वमसि महावाक्य बोधयित्रे नमो नमः ।
अयमात्मा ब्रह्मतत्वचोदयित्रे नमो नमः ।
छन्दः शब्दगुणाकाशहृदयाय नमो नमः । ४१०

करतलान्तामलक प्रत्यक्षाय नमो नमः ।
नाना विचित्रनिर्माणजगद्धात्रे नमो नमः ।
सर्वप्राणिबुद्धिस्वस्व कूटस्थाय नमो नमः ।
सर्वप्रकाशपरमचिन्मात्रज्योतिषे नमः ।
हृत्पुण्डरीकमध्यस्थ परात्मने नमो नमः ।

स्वात्मद्विधाकृतार्धस्त्रीपुरुषाय नमो नमः ।
आनन्दहृदयाकाशस्वानन्दाय नमो नमः ।
प्रणवान्तर्गत ब्रह्मतत्व बोध्रे नमो नमः ।
सर्वधी साक्षिभूतैक विमलाय नमो नमः ।
विश्वातीतगगन सदृश वैदेहाय नमो नमः । ४२०

अतिभावस्वरूपाख्यसुखात्मने नमो नमः ।
मधुकृद्वेदपुष्पाढ्य शिरीषाय नमो नमः ।
सर्ववेदान्त संवेद्यब्रह्मणे ते नमो नमः ।
हृन्मध्य लोहितो दह्र पुण्डरीकाय ते नमः ।
जीवात्मैक्य प्रदातारनिस्सङ्गाय नमो नमः ।
गन्तव्यदेश निर्मुक्त स्थाणवे ते नमो नमः ।
व्यक्ताव्यक्तचतुर्विंशत् शरीराय नमो नमः ।
सत्यासत्यविनिर्मुक्त सन्मात्राय नमो नमः ।
हृदाकाश चिदादित्य स्वतेजसे नमो नमः ।
अशेषप्राणिहृत्प्राण रक्षणाय नमो नमः । ४३०

शुद्धज्ञानशिवानन्दस्वयंकर्त्रे नमो नमः ।
श्रुतिसारांशतत्वार्थस्वयंश्रोत्रे नमो नमः ।
अनाद्यन्तवतीमायास्वयं स्रष्ट्रे नमो नमः ।
आर्द्रापर्वव्यतीपात स्वयं यष्ट्रे नमो नमः ।
स्वस्वरूपानुसन्धान स्वयं द्रष्ट्रे नमो नमः ।
समनोभूत ब्रह्मादिहृदिस्थाय नमो नमः ।
सर्वदा शमरूपाति शान्तान्ताय नमो नमः ।
सर्वान्तरस्थ सद्वर्गप्रतिष्ठात्रे नमो नमः ।
सर्वभूतात्मविभव शाश्वताय नमो नमः ।
सूक्ष्मकेवलसन्मात्र स्वभावाय नमो नमः । ४४०

कायिकादिविनिर्मुक्त केवलाय नमो नमः ।
शतजल्पाल्पवचनदुर्लक्ष्याय नमो नमः ।
कालात्मतानन्दमयलयात्मने नमो नमः ।
प्रपञ्चोत्पत्तिहेतुत्व चिदाकाशाय ते नमः ।
हृदाकाशपराकाशशयानाय नमो नमः ।
नैरन्तर्यचिदानन्द चैतन्याय नमो नमः ।
रज्जुसर्पभ्रान्ति बुद्धिविच्छेत्रे ते नमो नमः ।
अखण्डरस चिन्मात्र ब्रुवाणाय नमो नमः ।
सदा हृदंबुजाकाश सन्निविष्टाय ते नमः ।
नित्यचिन्मात्रसकलविज्ञानाय नमो नमः । ४५०
मौनसर्वफलावाप्तमुदिताय नमो नमः ।
वर्णाश्रमधर्मकर्मबन्धहर्त्रे नमो नमः ।
क्ष्मूर्य्यूमाख्य मनुजप्तेष्टसुखदाय नमो नमः ।
सदा मृष्टान्न सन्दत्तविजिघत्साय ते नमः ।
सदार्द्रसच्चिदानन्दधनदाय नमो नमः ।
वेदान्तगणपस्तुत्यविभवाय नमो नमः ।
महानन्द पदद्वन्द्व भवानीशाय नमो नमः ।
प्रलब्धपुण्यकल्याणपूर्णार्णाय नमो नमः ।
संविन्मयं सदानन्दानुभवाय नमो नमः ।
सत्तामात्रान्तरालक्ष्य शोभनाय नमो नमः । ४६०
नित्यसच्चिद्विलासात्म बोधकाय नमो नमः ।
केवलानन्द शुद्धात्म भावनाय नमो नमः ।
सकलेन्द्रियोपरम पञ्जराय नमो नमः ।
शिवशक्ति समायोग परमाय नमो नमः ।

कुसुमान्त सुगन्ध्यात्मनिगूढाय नमो नमः ।
प्रशान्त कलनारंभनीरागाय नमो नमः ।
हेयोपादेयनिर्मुक्त कुशलाय नमो नमः ।
दर्शनप्रत्ययाभास स्वयंभु ब्रह्मणे नमः ।
चिन्मनः कलनाकार प्रकाशाय नमो नमः ।
अखण्डितचिदाकाश ब्रह्मयोन्यै नमो नमः । ४७०

समस्तदेवतोपास्य श्री शिवाय नमो नमः ।
मुनिजनौघहृत्पद्मवासिने ते नमो नमः ।
विनतभक्त जन्मार्ति हारिणे ते नमो नमः ।
धनदादर्शिसौहार्दशोभिने ते नमो नमः ।
हृत्स्वच्छ भान्तमिहिर कोटिभाय नमो नमः ।
निजाज्ञा कांक्षिवैरिश्विहरीन्द्राय नमो नमः ।
सर्वकर्मफलप्राप्तिकारणाय नमो नमः ।
भक्तहृद्रोगनिर्नाशपेशलाय नमो नमः ।
पार्वतीनयनानन्द सूचनाय नमो नमः ।
अशब्दाव्यय रूपाति प्रकाशाय नमो नमः । ४८०

अशेषजगज्जन्मार्तिभञ्जनाय नमो नमः ।
अस्पर्शाङ्गुष्ठमात्राय निर्धूमज्योतिषे नमः ।
आम्नायान्तैकसंसिद्ध सुकराय नमो नमः ।
आम्नायतत्वमश्वस्थ परमाय नमो नमः ।
आविर्भूतमहानन्दमहाराजाय ते नमः ।
स्वात्मरूपतया नित्यं प्रतीताय नमो नमः ।
स्वानन्दराशिसंलग्नबाणभक्ताय ते नमः ।
सदा निजानन्दमग्नभानुकंपाय ते नमः ।

करणग्रामसंहार कालातीताय वै नमः ।
खादिपञ्चभूतसृष्टि कारणाय नमो नमः । ४९०
श्रीपर्णगांबुकणवत् पञ्चकृत्याय ते नमः ।
घटादिजगदाकाररहिताय नमो नमः ।
ङाङीङू संज्ञितार्थानामगम्याय नमो नमः ।
चमन्त्रार्थनिषण्णानाममृताय नमो नमः ।
छादनच्छन्दनच्छन्नविभागाय नमो नमः ।
जयार्थितजगच्छक्ति स्वरूपाय नमो नमः ।
ज्ञप्तिमात्रैकनिष्ठानां मुक्तिदाय नमो नमः ।
नित्यप्रत्यक्षनिर्णीतनिगमाय नमो नमः ।
भक्तहृत्पद्मसद्मैकनिषण्णाय नमो नमः ।
ममकारमहामोहनिवृत्ताय नमो नमः । ५००
महामोहतमोहारि स्वच्छन्दज्योतिषे नमः ।
महामन्त्रैकवाच्यार्थ महसे ब्रह्मणे नमः ।
मुहूर्तं चिन्तयन्नॄणां मुक्तिदाय नमो नमः ।
यथार्थप्रत्यगद्वैत सिद्धिदात्रे नमो नमः ।
लोलाचञ्चलसंसार नाशनाय नमो नमः ।
वाञ्छा वागुरविच्छित्तिहेतु भूत्यै नमो नमः ।
वेदवेदान्त निष्ठात्मभूतिदाय नमो नमः ।
मोदप्रमोदानन्दात्मशिवेष्टाय नमो नमः ।
क्षौं चित् शुद्ध चित्तात्मप्रसन्नाय नमो नमः ।
महदानन्द सन्दोह स्वानन्दाय नमो नमः । ५१०

इति श्रीनटेशपञ्चशती संपूर्णा

श्री गणेशाय नमः

# श्री चिदम्बरनटेश्वरनामत्रिशती स्तोत्रम्।

## पूर्व पीठिका।

शौनकाद्याः-

स्वामिन् सूत महाप्राज्ञ चिदम्बरसभापतेः।
नाम्नां शतत्रयं स्तोत्रं मन्त्रपञ्चाक्षरात्मकम्॥ १

अस्तीति सूचितं पूर्वं तथा नोक्तं तदद्य तु।
कृपया ब्रूहि भगवन्नस्माकं सर्वसिद्धये॥ २

इत्युक्तस्स च तान् प्राह सूतः पौराणिकोत्तमः।

श्री सूतः

यूयं महाभाग्यवन्तः शृणुध्वं मुनिपुङ्गवाः॥ ३

पुरा कल्पे भगवता शिवेन हरये तथा।
गौर्यै प्राक्तं महामन्त्रमयं नाम शतत्रयम्॥ ४

स्तोत्रं सर्वार्थदं यस्मिन् कल्पे योग बलेन तु।
पाराशर्येण गुरुणा ज्ञात्वा जातु प्रमोदतः॥ ५

रहस्ये मां समाहूयाप्युपदिष्टं तदद्य तु।

वक्ष्यामि शृणु विप्रेन्द्राः सावधानेन चेतसा॥ ६

आदावन्ते समाप्ते च सर्वेषां कर्मणां द्विजाः।
सकृत्स्मरण मात्रेण न्यूनाधिकविगर्हणम्॥ ७

न भवेच्च तथा तस्मात् जप्तव्यं सर्वदा नृभिः।
धान्त भान्तौ च लान्तश्च सदीर्घो वान्त इत्यपि॥ ८

तृतीय स्वरयुग्वायुः पञ्चवर्णश्चिदम्बरः ।
पञ्चपञ्चार्णषष्ठ्या तु शतत्रय मुदाहृतम् ।। ९

शुचिर्वाप्यशुचिर्वापि सर्वदा प्रजपेदिदम् ।।

## श्री चिदम्बर त्रिशती नामावलिः ।।

(आदौ श्री चिदम्बरपञ्चाक्षरवत् अंगन्यासादिकं कृत्वा प्रथमतः - श्रीसदाशिवस्य पूर्ववक्त्रोद्भवं - गौतमार्षं - गायत्री च्छन्दस्कं - इन्द्र देवताकं - पीतवर्णं - बिन्दुनादविभूषितं - श्री चिदम्बरपञ्चाक्षरीविद्याप्रथमावयवं - उदात्तस्वरोपेतं - आदिमं 'न' कारं ध्यात्वा- )

।। ओं नं ।।

ओं नटेशाय नमः । नगजा जानये नमः । नटनानन्द सुन्दराय नमः । नम्र दिक्पाल निकराय नमः । नमदानन्द दायकाय नमः । नारायणार्चिताय नमः । नारी भागाय नमः । नादान्त पूजिताय नमः । नामहीनाय नमः । नाश हीनाय नमः । नानारस मनोहराय नमः । नागभूषाय नमः । नाग पूज्याय नमः । नाग राजे नमः । नन्दि वाहनाय नमः । नदी जटाय नमः । नगा रूढाय नमः । नरनारायण स्तुताय नमः । नरास्त्र दात्रे नमः । नामाङ्क हीनाय नमः । २०

नारी मनोहराय नमः । नित्य शुद्धाय नमः । नित्य बुद्धाय नमः । नित्य मुक्ताय नमः । निरञ्जनाय नमः । निस्संगाय नमः । निरहंकाराय नमः । नीरूपाय नमः । निरुपाधिकाय नमः । नीप वाटी गताय नमः । नीप सुम मुदे नमः । नीप सन्निभाय नमः । नीहारांशु नुताय नमः । नीप्याय नमः । नीहारागभवापतये नमः । नुत्याय नमः । नुतिप्रियाय नमः ।

नूत्नाय नमः । नूपुराराव मंजुलाय नमः । नखच्छिन्नात्मभूशीर्षाय नमः । ४०

नखच्छिन्न नृकेसरिणे नमः । नखांशुजित शीतांशवे नमः । नागराज विभूषणाय नमः । नाम पारायण प्रीताय नमः । नासा मध्य विलोकनाय नमः । नन्दि वेद्याय नमः । नटाकाराय नमः । नग्नाय नमः । नारद पूजिताय नमः । नित्याय नमः । निगम संवेद्याय नमः । निःस्पृहाय नमः । निगमा कृतये नमः । निश्चलाय नमः । निगमानन्दाय नमः । नृत्तराजे नमः । नृत्त सुन्दराय नमः । नाटकी कृत भूताण्डाय नमः । नित्य तृप्ताय नमः । निराश्रयाय नमः । ६०

(श्री सदाशिवस्य दक्षिण वक्त्रोद्भवं - अत्र्यार्षं - अनुष्टुप्च्छन्दस्कं रुद्रदेवताकं - कृष्ण वर्णं बिन्दु नाद विभूषितं - श्री चिदम्बर पञ्चाक्षरी विद्या द्वितीयावयवं - स्वरित स्वरोपेतं - द्वितीयं 'म' कारं ध्यात्वा) ओं मम्।

ओं महादेवाय नमः । महा मोह जनकाय नमः । महिमा प्रियाय नमः । महते नमः । महर्षये नमः । मार्ताण्डाय नमः नमः । महर्षि गण सेविताय नमः । मनोज्ञाय नमः । मधुराय नमः । मार रिपवे नमः । माधव सुन्दराय नमः । मन्त्रिणे नमः । मन्त्राक्षराकाराय नमः । मार्कण्डेय वरप्रदाय नमः । महामेरु धनुषे नमः । मानिने नमः । माननीयाय नमः । महाप्रभवे नमः । महासेनगुरवे नमः । मान्याय नमः । ८०

महानटनलम्पटाय नमः । महाबलेशान वक्त्राय नमः । महाताण्डव वैभवाय नमः । मध्यार्जुन मुखानन्दाय नमः । मननत्राणतत्पराय नमः । मायाविने नमः । मञ्जुमञ्जीरचरणाय

नमः । मण्डलान्तराय नमः । मणिपूरान्तर गताय नमः । मधुभृच्चक्र ताण्डवाय नमः । मृडानीवल्लभाय नमः । मौनिने नमः । मौन व्याख्यानतत्पराय नमः । मृत्युञ्जयाय नमः । मृत्यु मृत्यवे नमः । मुदिताय नमः । मुदितान्तराय नमः । मुनये नमः । मुनीश्वराय नमः । मेध्याय नमः । १००

महार्घ मणिभूषणाय नमः । मनोन्मनाय नमः । मनोरूपाय नमः । मही चक्रिणे नमः । मरालगाय नमः । मात्रे नमः । मातंग विनुताय नमः । माधवेषुधि वारिधये नमः । महा कालाय नमः । महेशानाय नमः । महेष्वासाय नमः । महेश्वराय नमः । महोत्सवाय नमः । महोत्साहाय नमः । मङ्गळायतनाय नमः । मधुने नमः । मातृका वर्ण संक्लृप्ताय नमः । महा कैलास संस्थिताय नमः । महा साम्राज्य सन्दायिने नमः । मनोवाचामगोचराय नमः । १२०

(श्री सदाशिवस्य उत्तरवक्त्रोद्भवं - अङ्गिरार्षं - बृहतीच्छन्दस्कं-ब्रह्म देवताकं - स्वर्णवर्णं - बिन्दुनादविभूषितं - श्रीचिदम्बरपञ्चाक्षरी विद्यातृतीयावयवं - प्रचयस्वरोपेतं - तृतीयं - वा' कारं ध्यात्वा) ओं वां

वाक्पतये नमः । वारिजारूढाय नमः । वारि भृते नमः । वाञ्छितार्थदाय नमः । वाञ्छाकल्पलताभिख्याय नमः । वामदेवाय नमः । वनाधिपाय नमः । वराय नमः । वरार्चिताय नमः । वन्द्याय नमः । वसिष्ठ जनकाय नमः । वसवे नमः । वामाङ्गाय नमः । वामन हराय नमः । वामनेड्याय नमः । वरप्रदाय नमः । वासवाय नमः । वासवाराद्ध्याय नमः । वनमालिप्रियाय नमः । विधये नमः । १४०

विधिशीर्षहराय नमः । वीणाधराय नमः । वैवस्वतान्तकाय नमः । वैवाहिकाय नमः । विशिष्टार्थाय नमः । विशेष्याय नमः । विन्ध्यदर्पघ्ने नमः । वृषस्कन्धाय नमः । वृषारूढाय नमः । वरुणाय नमः । वरुणार्चिताय नमः । वरिष्ठाय नमः । वज्र कवचाय नमः । वज्रभेत्रे नमः । विरूपवते नमः । विश्वरूपाय नमः । विराड्रूपाय नमः । विराट्हृत्पद्म भासुराय नमः । वायुरूपाय नमः । वायुभक्षभूषाय नमः । १६०

वागीश्वरी प्रियाय नमः । वागीशाय नमः । वेद विनुताय नमः । वेद वाहाय नमः । वराहघ्ने नमः । विषभुजे नमः । विबुध श्रेष्ठाय नमः । विरिञ्चि विनुताय नमः । विधवे नमः । विधु भूषाय नमः । विरूपाक्षाय नमः । विधुवह्न्यर्कलोचनाय नमः । वटुकाय नमः । वटुकाराध्याय नमः । वर्षिष्ठान्तेवसद्गणाय नमः । वेतालनटनानन्दाय नमः । वनभिक्षाटनोद्यताय नमः । वीरासनाय नमः । वीरभद्राय नमः । विश्वसंमोहनाकृतये नमः । १८०

(श्री सदाशिवस्य पश्चिमवक्त्रोद्भवं - विश्वामित्रार्षं, - त्रिष्टुप् छन्दस्कं, - विष्णु देवताकं, - धूम्र वर्णं, - बिन्दुनाद विभूषितं - श्री चिदम्बरपञ्चाक्षरीविद्यातुरीयावयवं अनुदात्तस्वरोपेतं तुरीयं 'शि' (शी)कारं ध्यात्वा ओं शिं(शीं)

शिवाय नमः । शिवङ्कराय नमः । शिष्टाय नमः । शितिकण्ठाय नमः । शिवार्ध भाजे नमः । शिवानन्दाय नमः । शिवाराध्याय नमः । शिवकामाय नमः । शिवाश्रिताय नमः । शतानन्दाय नमः । शतमुखाय नमः । शतमन्यवे नमः ।

शताक्षराय नमः । शरभाय नमः । शरभाकाराय नमः । शुकभृते नमः । शुकसन्नुताय नमः । शूराय नमः । शूरजनाराध्याय नमः । श्रुत्युक्त स्तुत वैभवाय नमः । २००

शेखरीभूत शीतांशुगंगाय नमः । शेषांगुळीयकाय नमः । शेवधये नमः । श्रेष्ठ जनकाय नमः । शेमुषी गोष्ठिनाटकाय नमः । शमिने नमः । शमनसंहर्त्रे नमः । शरण्याय नमः । शमनेष्टदाय नमः । शङ्कराय नमः । शास्त्र कृते नमः । शंभवे नमः । शापायुध विनिग्रहाय नमः । शंबराराति विमुखाय नमः । शङ्खभृते नमः । शमिताखिलाय नमः । शाश्वताय नमः । शासकाय नमः । शास्त्रे नमः । शरणागत पालकाय नमः । २२०

शबराय नमः । शाबराय नमः । शान्ताय नमः । श्रीकण्ठाय नमः । श्रीमुखार्च्चिताय नमः । शिवाश्लिष्टाय नमः । शिवार्धांगाय नमः । शिलादसुत सन्नुताय नमः । शैलेन्द्र चापाय नमः । शार्दूल चर्मभृते नमः । शशिशेखराय नमः । शिवकामेश्वराय नमः । श्रीमते नमः । शिवासक्ताय नमः । शिवाश्रयाय नमः । श्रितानन्दाय नमः । शतधृतिशिरोभृते नमः । शाकर प्रियाय नमः । शातकुंभसमाकाराय नमः । शान्त हृत्पद्म संस्थिताय नमः । २४०

(श्री सदाशिवस्य उत्तर(ऊर्ध्व) वक्त्रोद्भवं, - भरद्वाजार्षं, - विराट् छन्दस्कं - स्कन्द देवताकं, - रक्त वर्णं, बिन्दु नाद विभूषितं, - श्री चिदम्बर पञ्चाक्षरी विद्या पञ्चमावयवं, - उदात्त स्वरोपेतं, - पञ्चमं ‘य’ कारं ध्यात्वा- नमः ।) ओं यं

यज्ञाय नमः । यज्ञ प्रियाय नमः । यज्वने नमः । यायजूकाय नमः । यतेन्द्रियाय नमः । यमिने नमः । यमहराय नमः । यानीकृताम्नायाय नमः । यतीश्वराय नमः । यन्त्रे नमः । यन्त्रित विध्यण्डाय नमः । यजमानाय नमः । युवाकृतये नमः । यक्ष राज सखाय नमः । यष्ट्रे नमः । यतात्मने नमः । यादसां पत्ये नमः । यंत्रिणे नमः । यंत्रांतराराध्याय नमः । यंत्रितावनि मण्डलाय नमः । २६०

यथेष्ट फलदाय नमः । याम्य दिङ्मुखाय नमः । याकिनी प्रियाय नमः । योगिने नमः । योगेश्वराय नमः । युक्ताय नमः । योगपट्ट विराजिताय नमः । युगान्त कृते नमः । यशो दात्रे नमः । यशस्विने नमः । यक्ष वन्दिताय नमः । यमुनाळीशिखाजूटाय नमः । यकाराभय दोर्धराय नमः । यातना रहिताय नमः । याच्ञा हीनाय नमः । यष्टि धराय नमः । यतये नमः । यन्त्रात्मने नमः । यामिनी लास्याय नमः । याम पूज्याय नमः । २८०

युधिष्ठिराय नमः । यज्ञान्त कृते नमः । यज्ञ पूज्याय नमः । यज्ञ वाट नटेश्वराय नमः । यज्ञ देवोत्तमाय नमः । यज्ञ विधये नमः । यज्ञरसोत्सुकाय नमः । यमस्मरपुरान्धेभ जलदक्षाजनिग्रहाय नमः । यादःकोलगजारातिखर्वकच्छप गर्वघ्ने नमः । यक्ष राक्षस भेतालभूतापस्मार भञ्जनाय नमः । योषा संक्रान्त वामांगाय नमः । योषीकृत रमाधवाय नमः । योषा नायक संप्रीताय नमः । योषिन्मण्डल ताण्डवाय नमः । यंत्रोल्लिखित चिन्मूर्तये नमः । यायजूकसमर्चिताय नमः । यज्ञवाटसभाध्यक्षाय नमः । यामिनीलास्य निश्चलाय नमः । याथात्म्य तत्व चिन्मात्राय नमः । श्री चिदम्बर सभानटाय नमः ३००

इत्येवं स्तोत्र राजं तत् चिदम्बर सभापतेः ।
पञ्चाक्षरांकितं नाम्नां शत त्रय मुदाहृतम् ।। १

प्रदोषकालेऽप्यार्द्रायां सोम वारे विशेषतः ।
शुक्र वारे तथाप्यन्ये यस्मिन् कस्मिन्दिनेऽपि वा ।। २

शिवस्य सन्निधौ बिल्व मूले पुण्य सरित्तटे ।
स्थित्वा जपेद्विशेषेण क्षुद्र शान्तिकरं महत् ।। ३

आर्द्रा नक्षत्र मारभ्य पुनरार्द्रान्तमादरात् ।
दिनसंख्यानुगुण्येन जपेत् सर्वार्थदं परम् ।। ४

नामैकस्यास्य नार्हन्ति तुलामन्यानि भो द्विजाः ।
गोप्याद्गोप्यतरं ज्ञेयं पठनात्सर्व सिद्धिदम् ।।५

माधवाय पुरा गौर्यै प्रोक्तमेतत् शिवेन तु ।
सर्व संपत्करं पुंसां आयुरारोग्य दायकम् ।। ६

त्रिकालं यः पठेन्नित्यं शिव सायुज्य माप्नुयात् ।

इति श्री चिदम्बर रहस्ये महेतिहासे द्वितीयांशे श्री नटेश्वर नाम त्रिशती स्तोत्र वर्णनं नाम सप्त विंशोध्यायः

ओं चित्सभेशाय विद्महे ताण्डवेशाय धीमहि ।
तन्नो रुद्रः प्रचोदयात् ।

ओं चिदम्बर ताण्डवाय विद्महे त्रैलोक्य नाथाय धीमहि ।
तन्नो भर्गः प्रचोदयात् ।

ओं ताण्डवेश्वराय विद्महे चिदम्बरेशाय धीमहि ।
तन्नो नटेशः प्रचोदयात् ।

# श्रीमदानन्दनटराजाष्टोत्तरशतनामस्तोत्रम्

चिदम्बरेश्वरः शंभुः नटेशो नटनप्रियः ।
अपस्मारहरो हंसो नृत्तराजः सभापतिः ।। १

पुण्डरीकपुराधीशः श्रीमद्धे मसभेश्वरः ।
शिवश्चिदम्बरमनुर्मन्त्रमूर्तिर्हरिप्रियः ।। २

द्वादशान्तस्थितो नृत्तो नृत्तमूर्तिः परात्परः ।
परानन्दः परंज्योतिः आनन्दो विबुधेश्वरः ।। ३

परप्रकाशो नृत्ताङ्गो नृत्तपादस्त्रिलोचनः ।
व्याघ्रपादप्रियो मन्त्रराजस्तिल्ववनेश्वरः ।। ४

हरो रत्नसभानाथः पतञ्जलिवरप्रदः ।
मन्त्रविग्रह ओंकारः शंकरश्चन्द्रशेखरः ।। ५

नीलकंठो ललाटाक्षो वह्निहस्तो महेश्वरः ।
आनन्दताण्डवः श्वेतो गङ्गाधरो जटाधरः ।। ६

चक्रेशः कुञ्चितपदः श्रीचक्राङ्गोऽभयप्रदः ।
मणिनूपुरपादाब्जः त्रिपुरावल्लभेश्वरः ।। ७

बीजहस्तः चक्रनाथो बिन्दुत्रैकोणवासकः ।
पांचभौतिकदेहाङ्गः परमानन्दताण्डवः ।। ८

भुजङ्गभूषणः पंचदशाक्षरमनोहरः ।
विश्वेश्वरो विरूपाक्षो विश्वातीतो जगद्गुरुः ।। ९

त्रिचत्वारिंशत्कोणाङ्गः प्रभाचक्रेश्वरः प्रभुः ।
नवावरणचक्रेशो नवचक्रेश्वरीप्रियः ।। १०

नाट्येश्वरः सभानाथः सिंहवर्मप्रपूजितः ।

व्याघ्रचर्माम्बरधरो भीमः ह्रीं(क्लीं)ङ्कारनायकः ।। ११

ह्रीं(ऐं)काररुद्रस्त्रिशिवस्तत्वातीतो निरञ्जनः ।
रामोऽनन्तस्तत्वमूर्तिः रुद्रः कालान्तकोऽव्ययः ।। १२

क्ष्म्रचूंकारशंभुरव्यक्तः त्रिगुणश्चित्प्रकाशकः ।
सौंकारसोमस्तत्वज्ञोऽघोरो दक्षाध्वरान्तकः ।। १३

कामारिर्गजसंहर्ता वीरभद्रः सदाशिवः ।
भिक्षाटनः कृष्णगन्धप्रियः कंकालभैरवः ।। १४

नृसिंहगर्वहरणो भद्रकालीमदान्तकः ।
निर्विकल्पो निराकारो निर्मलाङ्गो निरामयः ।। १५

ब्रह्मविष्णुप्रियः आनन्दनटेशो भक्तवत्सलः ।
श्रीमद्दभ्रसभानाथः शिवकामीमनोहरः ।। १६

श्रीमदानन्दनटराजस्याष्टोत्तरं शतम् ।
नाम्नां संकीर्तयेत् नित्यं सर्वपापप्रणशकम् ।। १७

पुत्रपौत्रप्रदं वंशवृद्धिदं विषनाशनम् ।
आयुष्करं व्याधिहरं सर्वसंपत्प्रदायकम् ।। १८

सर्वमङ्गलसंप्राप्तिः जायते तस्य हि ध्रुवम् ।

इति श्रीमदानन्दनटराजाष्टोत्तरशतनाम स्तोत्रं संपूर्णम् ।।

## श्री आनन्दनटराजाष्टोत्तर शतनामावलिः

ओं चिदम्बरेश्वराय नमः । शम्भवे नमः । नटेशाय नमः । नटनप्रियाय नमः । अपस्मार हराय नमः । हंसाय नमः । नृत्तराजाय नमः । सभापतये नमः । पुण्डरीकपुराधीशाय नमः । श्रीमद्धेम सभेश्वराय नमः । शिवाय नमः । चिदम्बर मनवे नमः। मन्त्रमूर्तये नमः । हरिप्रियाय नमः । द्वादशान्तस्थिताय नमः । नृत्ताय नमः । नृत्त मूर्तये नमः । परात्पराय नमः । परानन्दाय नमः । परं (परस्मै) ज्योतिषे नमः २० ।

आनन्दाय नमः । विबुधेश्वराय नमः । परप्रकाशाय नमः । नृत्ताङ्गाय नमः । नृत्तपादाय नमः । त्रिलोचनाय नमः । व्याघ्रपाद प्रियाय नमः । मन्त्रराजाय नमः । तिल्ववनेश्वराय नमः । हराय नमः । रत्नसभानाथाय नमः । पतञ्जलिवरप्रदाय नमः । मन्त्रविग्रहाय नमः । ओंकाराय नमः । शङ्कराय नमः । चन्द्रशेखराय नमः । नीलकण्ठाय नमः । ललाटाक्षाय नमः । वह्निहस्ताय नमः । महेश्वराय नमः । ४०

आनन्दताण्डवाय नमः । श्वेताय नमः । गङ्गाधराय नमः । जटाधराय नमः । चक्रेशाय नमः । कुञ्चितपदाय नमः । श्रीचक्रांगाय नमः । अभयप्रदाय नमः । मणिनूपुरपादाब्जाय नमः । त्रिपुरावल्लभेश्वराय नमः । बीजहस्ताय नमः । चक्रनाथाय नमः । बिन्दुत्रैकोणवासकाय नमः । पाञ्चभौतिकदेहाङ्गाय नमः। परमानन्दताण्डवाय नमः । भुजङ्गभूषणाय नमः । पञ्चदशाक्षरमनोहराय नमः । विश्वेश्वराय नमः । विरूपाक्षाय नमः । विश्वातीताय नमः । ६०

जगद्गुरवे नमः । त्रिचत्वारिंशत्कोणाङ्गाय प्रभाचक्रेश्वराय नमः । प्रभवे नमः । नवावरणचक्रेशाय नमः । नवचक्रेश्वरीप्रियाय नमः । नाट्येश्वराय नमः । सभानाथाय नमः । सिंहवर्मप्रपूजिताय नमः । व्याघ्रचर्मांबरधराय नमः । भीमाय नमः । ह्रीं(क्लीं)कारनायकाय नमः । ह्रीं(ऐं)काररुद्राय नमः । त्रिशिवाय नमः । तत्वातीताय नमः । निरञ्जनाय नमः । रामाय नमः । अनन्ताय नमः । तत्वमूर्तये नमः । रुद्राय नमः । ८०

कालान्तकाय नमः । अव्ययाय नमः । क्ष्म्र्यूंकार शंभवे नमः । अव्यक्ताय नमः । त्रिगुणाय नमः । चित्प्रकाशकाय नमः । सौंकार सोमाय नमः । तत्वज्ञाय नमः । अघोराय नमः । दक्षाध्वरान्तकाय नमः । कामारये नमः । गजसंहर्त्रे नमः । वीरभद्राय नमः । सदाशिवाय नमः । भिक्षाटनाय नमः । कृष्णगन्धप्रियाय नमः । कङ्काळभैरवाय नमः । नृसिंहगर्वहरणाय नमः । भद्रकाळीमदान्तकाय नमः । निर्विकल्पाय नमः । निराकाराय नमः । निर्मलाङ्गाय नमः । निरामयाय नमः । ब्रह्मविष्णुप्रियाय नमः । आनन्दनटेशाय नमः । भक्तवत्सलाय नमः । श्रीमद्भ्रसभानाथाय नमः । शिवकामीमनोहराय नमः । १०८

इति श्री चिदम्बर कल्पोक्त श्री नटेश्वर अष्टोत्तर शत नामावलिः

ओं चित्सभेशाय विद्महे नटराजायधीमहि । तन्नः शिवः प्रचोदयात् ।

# श्रीशिवकामसुन्दरीसहस्रनामस्तोत्रम्

॥ पूर्वपीठिका ॥

यस्यास्सर्वं समुत्पन्नं चराचरमिदं जगत्।
इदं नमो नटेशान्यै तस्यै कारुण्यमूर्तये ॥

कैलासाद्रौ सुखासीनं शिवं वेदान्तगोचरम्।
सर्वविद्येश्वरं भूतिरुद्राक्षालंकृतं परम्॥ १

सर्वलक्षणसंपन्नं सनकादिमुनीडितम्।
संसारारण्यदावाग्निं योगिराजं यतेन्द्रियम्॥ २

मुकुटेन्दुसुधापूरलब्धजीवकशीर्षकम्।
व्याघ्रचर्माम्बरधरं नीलकण्ठं कपर्दिनम्॥ ३

सव्यहस्ते वह्निधरं मन्दस्मितमुखांबुजम्।
ढक्कां च दक्षिणे हस्ते वहन्तं च त्रिलोचनम्॥ ४

अभयं दक्षहस्तेन दर्शयन्तं मनोहरम्।
डोलहस्तेन वामेन दर्शयन्तं पदांबुजम्॥ ५

कुंचितं, दक्षपादेन तिष्ठन्तं मुसलोपरि।
ब्रह्मविष्ण्वादिविनुतं वेदवेद्यं नटेश्वरम्॥ ६

प्रणम्य पार्वती गौरी पप्रच्छ मुदितानना।
सर्वलक्षणसंपन्ना सर्वदा सर्वदा नृणाम्॥ ७

पार्वत्युवाच-

शिव! शङ्कर! विश्वेश! महादेव! दयानिधे!।
सर्वासां चैव देवीनां नामसाहस्रमुत्तमम्॥ ८

पुरा प्रोक्तं सदानन्द! मह्यं श्रीपतिपूजित!।
शिवकामसुन्दरीनाम्नां सहस्रं वद सुन्दर!॥ ९

सद्यस्संपत्करं पुण्यं सर्वपापप्रणाशनम्।
इत्युक्त्वा पार्वती देवी तुष्टाव नटनेश्वरम्॥ १०

सत्यप्रबोधसुखसन्ततिरूप! विश्व-
मायेन्द्रजालिकवरेण्य! समस्तसाक्षिन्!।
सृष्टिस्थितिप्रलयहेतुकविष्णुरुद्र!
श्रीमन्नटेश! मम देहि करावलम्बम्॥ ११

भूवारिवह्निपवनाम्बरचन्द्रसूर्य-
यज्वाष्टमूर्तिविमलीकृतविग्रहेश!।
स्वांघ्र्यम्बुजद्वयनिषक्तहृदां प्रसन्न!
श्रीमन्नटेश! मम देहि करावलम्बम्॥ १२

लिङ्गाकृते! पशुपते! गिरिजापते! त्वं
नारायणेश! गिरिवास! विधीश! शंभो!।
फालाक्ष! शङ्कर! महेश्वर! मन्मथारे!
श्रीमन्नटेश! मम देहि करावलम्बम्॥ १३

श्रीनीलकण्ठ! शमनान्तक! पञ्चवक्त्र!
पञ्चाक्षरप्रिय! परात्पर! विश्ववन्द्य!।
श्रीचन्द्रचूड! गजवक्त्रपितः! परेश!
श्रीमन्नटेश! मम देहि करावलम्बम्॥ १४

गङ्गाधर! प्रमथनाथ! सदाशिवार्या-
जाने! जलन्धररिपो! जगतामधीश!।
शर्वोग्र! भर्ग! मृड! शाश्वत! शूलपाणे!
श्रीमन्नटेश! मम देहि करावलम्बम्॥ १५

स्थाणो! त्रिणेत्र! शिपिविष्ट! महेश! तात!
नारायणप्रिय! कुमारगुरो! कपर्दिन्।

शम्भो ! गिरीश ! शिव ! लोकपते ! पिनाकिन् !
श्रीमन्नटेश ! मम देहि करावलम्बम् ।। १६

खट्वाङ्गिन् ! अन्धकरिपो ! भव ! भीम ! रुद्र !
देवेश ! खण्डपरशो ! करुणाम्बुराशे ! ।
भस्माङ्गराग ! परमेश्वर ! विश्वमूर्ते !
श्रीमन्नटेश ! मम देहि करावलम्बम् ।। १७

विश्वेश्वरात्मक ! विवेकसुखाभिराम !
श्रीवीरभद्र ! मखहन्तरुमासहाय ! ।
वीरेश्वरैणकर ! शुभ्रवृषाधिरूढ !
श्रीमन्नटेश मम देहि करावलम्बम् ।। १८

एवं स्तुत्वा महादेवी पश्चाङ्गं प्रणनाम ह ।
ततस्तुष्टो नटेशश्च प्रोवाच वचनं शुभम् ।। १९
एवमेव पुरा देवी महालक्ष्मीः पतिव्रता ।
शङ्खचक्रगदापाणिः सर्वलोकहितावहः ।। २०

धर्मसंस्थापनार्थायावतारान् युगे युगे ।
करिष्यति महा विष्णुः मम भर्ता दश शृणु ।। २१

मत्स्यः कूर्मो वराहश्च नारसिंहोऽथ वामनः ।
रामो दाशरथिश्चैव रामः परशुधारकः ।। २२

हलभृत् बलरामश्च कृष्णः कल्किः दश स्मृताः ।
अवतारेषु दशासु मद्भर्तुर्नाशशङ्कया ।। २३

प्राप्ता भवन्तं शरणं भवानेव परा गतिः ।
इत्युक्त्वा च महालक्ष्मीर्भक्तानामिष्टदायकम् ।। २४

वेदपादस्तवं चारु मधुरं मधुराक्षरम् ।
उक्त्वा तुष्टाव मुदिता नटेशानं महेश्वरम् ।। २५

विघ्नेश्वरं वीतविरागसेवितम्
विधीन्द्रविष्ण्वादिनतांघ्रिपङ्कजम्।
सभासदामाशु सुखार्थसिद्धिदं
गणानां त्वा गणपतिं हवामहे ।। २६

नगेन्द्रतनयारम्यस्तन्यपानरताननम्।
माणिक्यकुण्डलधरं कुमारं पुष्करस्रजम्।। २७

नमः शिवाय सांबाय सगणाय ससूनवे।
नमो ज्ञानसभेशाय दिशां च पतये नमः ।। २८

नमो ब्रह्मादिदेवाय विष्णुकान्ताय शंभवे।
पीतांबराय च नमः पशूनां पतये नमः ।। २९

सन्मार्गदाय शिष्टानामाश्रितानां द्विजन्मनाम्।
अभक्तानां मोहदात्रे पथीनां पतये नमः ।। ३०

अपस्मारमधः कृत्य नृत्यन्तं तस्य पृष्ठके।
सर्वाभरणरम्यं तं पश्येम शरदश्शतम्।। ३१

सुन्दरं स्मेरवदनं नटराजमुमापतिम्।
संपूज्य नृत्यपादं ते जीवेम शरदश्शतम्।। ३२

कुंभीन्द्रदैत्यं हतवानिति शंभुर्जगत्पतिः।
श्रुत्वा ते कीर्तिममलां नन्दाम शरदश्शतम्।। ३३

मन्मथान्धकसंहारकथाश्रुतिमनोहरम्।
श्रुत्वा ते विक्रमयुतं मोदाम शरदश्शतम्।। ३४

सर्वदुःखान्विहायाशु शिव तेऽङ्घ्रियुगाम्बुजम्।
अर्चयन्तः सदा धन्या भवाम शरदश्शतम्।। ३५

त्वत्कीर्तनं सदा भक्त्या सर्वकल्मषनाशनम्।
शंकराघहर स्वामिन् शृणवाम शरदश्शतम्।। ३६

त्वच्चरित्रं पवित्रं च सर्वदारिद्र्यनाशनम्।
अस्मत्पुत्रप्रणप्तॄणां प्रब्रवाम शरदश्शतम्।। ३७

त्वद्भक्तकल्पकतरुमाश्रयन्तस्सदा वयम्।
इन्द्रियाघौघनिचयैरजीतास्स्याम शरदश्शतम्।। ३८

एवं स्तुत्वा महादेवी महालक्ष्मीर्मनोहरा।
प्रणम्य चित्सभानाथं तिष्ठन्ती मुदितानना।। ३९

मन्माङ्गल्यस्य रक्षायै मन्त्रमेकं ममादिश।
तां दृष्ट्वा च महादेवः प्रहसन्निदमब्रवीत्।। ४०

त्वं शीघ्रं गच्छ देवेशीं शिवकामां च सुन्दरीम्।
तत्र गत्वा महेशानीं पूजय त्वं विशेषतः।। ४१

सहस्रकुसुमैः पद्मैः नैवेद्यैश्च मनोहरैः।
इत्युक्त्वा परमप्रीतो भगवान्भक्तवत्सलः।। ४२

शिवकामसुन्दरीनाम्नां सहस्रं प्रजगाद ह।
उपदिश्य च तां देवीं प्रेषयामास शंकरः।। ४३

लक्ष्मीर्गत्वा महेशानीं शिवकामीं मुदान्विता।
शिवोक्तेन प्रकारेण सहस्रैः पङ्कजैः क्रमात्।। ४४

नामभिश्च त्रितारैश्च युक्तैश्च सुमहत्तरैः।
पूजयामास विधिवत् शिवाचिन्तनतत्परा।। ४५

तदा शिवः शोधनाय तस्याः चित्तं जगत्प्रभुः।
आनीतेषु च पद्मेषु न्यूनमेकं चकार हि।। ४६

अतीव दुःखिता लक्ष्मीः पूर्तिकामेच्छया स्वयं।
अभावपुष्पसंपूर्त्यै नेत्रमुत्पाट्य वामकम्।। ४७

अर्चयामास लक्ष्मीश्च भक्त्या परमया युता।
दृष्ट्वेदं सुन्दरी देवी शिवकाममनोहरी।। ४८

पूर्वस्मादपि सौन्दर्यं नेत्रं दत्वाऽतिहर्षतः।
तुष्टाऽहमिष्टं व्रियतां वरमित्याह शंकरी।। ४९

तदा वव्रे महालक्ष्मीः सर्वलोकप्रियंकरम्।
सौमंगल्यं कुरु मम दीर्घं च भवतु ध्रुवम्।
तथा भवतु भद्रं ते विष्णुं गच्छ यथासुखम्।। ५०

इत्युक्त्वाऽन्तर्दधे देवी शिवकामी महेश्वरी।
लक्ष्मीश्च विष्णुं गत्वाऽथ यथापूर्वं स्थितोरसि।। ५१

तादृशं नामसाहस्रं शिवकाम्याः मनोहरम्।
वदामि शृणु हे देवीनामसाहस्रमुत्तमम्।। ५२

ऋषिः छन्दो देवता च बीजं शक्तिश्च कीलकम्।
कराङ्गन्यासकौ पूर्वं सुरहस्यं महेश्वरि।। ५३

नाम्नां त्रिपुरसुन्दर्याः यत्प्रोक्तं तद्वदेव हि।
शिवकामसुन्दरीप्रीत्यै विनियोगो जपे स्मृतः।। ५४

दिग्बन्धं ततो ध्यायेत् शिवकामीं महेश्वरीं।
ततश्च पञ्चपूजा च कर्तव्या मनुजापिना।। ५५

ततः परं स्तोत्रमेतज्जप्तव्यं भद्रकामिना।
स्तोत्रान्ते च प्रकर्तव्यमङ्गन्यासं च पूर्ववत्।। ५६

कृत्वा च दिग्विमोकं च ततो ध्यायेच्च सुन्दरीम्।
लमित्यादिममन्त्रैश्च पञ्चपूजां च संवदेत्।। ५७

ओं अस्य श्री शिवकामसुन्दरीसहस्रनामस्तोत्रमहा मन्त्रस्य । आनन्दभैरवदक्षिणामूर्तिः ऋषिः । देवी गायत्री छन्दः । श्री शिवकामसुन्दरी देवता । बीजं, शक्तिः, कीलकं कराङ्गन्यासौ च श्री महात्रिपुरसुन्दरीमहामन्त्रवत् ।

## ।। ध्यानम् ।।

पद्मस्थां कनकप्रभां परिलसत्पद्माक्षियुग्मोत्पलाम्
अक्षस्रक्शुकशारिकाकटिलसत्कल्हारहस्ताब्जिनीम् ।

रक्तस्रक्सुविलेपनाम्बरधरां राजीवनेत्रार्चितां
ध्यायेत् श्रीशिवकामकोष्ठनिलयां नृत्तेश्वरस्य प्रियाम् ।।

मुक्ताकुन्देन्दुगौरां मणिमयमकुटां रत्नताटंकयुक्तां
अक्षस्रक्पुष्पहस्तां सशुककटिकरां चन्द्रचूडां त्रिणेत्रीम् ।

नानालंकारयुक्तां सुरमकुटमणिद्योतित स्वर्णपीठां
यासापद्मासनस्थां शिवपदसहितां सुन्दरीं चिन्तयामि ।।

रत्नताटंकसंयुक्तां सुवर्णकवचान्विताम् ।
दक्षिणोर्ध्वकराग्रेण स्वर्णमालाधरां शुभाम् ।।

दक्षाधः करपद्मेन पुल्लकल्हार धारिणीम् ।
वामेनोर्ध्वकराब्जेन शुकार्भकधरां वराम् ।

कटिदेशे वामहस्तं न्यस्यन्तीं च सुदर्शनाम् ।।

शिवकामसुन्दरीं नौमि प्रसन्नवदनां शिवाम् ।

लमित्यादिपञ्चपूजा ।।

# ।। श्री शिवकामसुन्दरीसहस्रनामस्तोत्रम् ।।

ओं ऐं ह्रीं श्रीं अं - १

अगण्याऽगण्यमहिमाऽसुरप्रेतासनस्थिता ।
अजराऽमृत्युजननाऽप्यकालान्तक भीकरा ।। १

अजाऽजांशसमुद्भूताऽमरालीवृतगोपुरा ।
अत्युग्राजिनटच्छत्रुकबंधानेककोटिका ।। २

अद्रिदुर्गाऽणिमासिद्धिदापितेष्टामरावलिः ।
अनन्ताऽनन्यसुलभप्रियाऽद्भुतविभूषणा ।। ३

अनूरुकरसंकाशाऽखण्डानन्दस्वरूपिणी ।
अन्धीकृतद्विजारातिनेत्राऽत्युग्राट्टहासिनी ।। ४

अन्नपूर्णाऽपराऽलक्ष्याऽम्बिकाऽघविनाशिनी ।
अपारकरुणापूरनिभरेखांजनाक्षिणी ।। ५

अमृतांभोधिमध्यस्थाऽणिमासिद्धिमुखाश्रिता ।
अरविन्दाक्षमालालिपात्रशूलधराऽनघा ।। ६

अश्वमेधमखावाप्तहविःपुंजकृतादरा ।
अश्वसेनावृताऽनेकपारूढाऽप्यगजन्मभूः ।। ७

ओं ऐं ह्रीं श्रीं आं - २

आकाशविग्रहाऽऽनन्ददात्री चाज्ञाब्जभासुरा ।
आचारतत्परस्वान्तपद्मसंस्थाऽऽढ्यपूजिता ।। ८

आत्मायत्तजगच्चक्रा चात्मारामपरायणा ।
आदित्यमंडलान्तस्था चादिमध्यान्तवर्जिता ।। ९

आद्यन्तरहिताऽचार्या चादिक्षान्तार्णरूपिणी ।
आद्याऽमात्यनुता चाज्यहोमप्रीताऽऽवृतांगना ।। १०

आधारकमलारूढा चाधाराधेयविवर्जिता।
आधिहीनाऽऽसुरीदुर्गाऽऽजिसंक्षोभितासुरा।। ११

आधोरणाज्ञाशुण्डाग्राकृष्टासुरगजावृता।
आश्चर्यविग्रहाऽऽचार्यसेविताऽऽगमसंस्तुता।। १२

आश्रिताखिलदेवादिबृन्दरक्षणतत्परा।

ओं ऐं ह्रीं श्रीं इं - ३

इच्छाज्ञानक्रियाशक्तिरूपेरावतिसंस्तुता।। १३

इन्द्राणीरचितश्वेतच्छत्रेडाभक्षणप्रिया।
इन्द्राक्षीन्द्रार्चितेन्द्राणी चेन्दिरापतिसोदरी।। १४

इन्दिरेन्दीवरश्यामा चेरम्मदसमप्रभा।
इभकुंभाभवक्षोजद्वया चेक्षुधनुर्धरा।। १५

इभदन्तोरुनयना चेन्द्रगोपसमाकृतिः।
इभशुण्डोरुयुगला चेन्दुमण्डलमध्यगा।। १६

इष्टार्तिघ्नीष्टवरदा चेभवक्त्रप्रियंकरी।

ओं ऐं ह्रीं श्रीं ईं - ४

ईशित्वसिद्धिसंप्रार्थितापसेषत्स्मितानना।। १७

ईश्वरीशप्रिया चेशताण्डवालोकनोत्सुका।
ईक्षणोत्पन्नभुवनकदम्बा चेड्यवैभवा।। १८

ओं ऐं ह्रीं श्रीं उं-५

उच्चनीचादिरहिताऽप्युरुकान्तारवासिनी।
उत्साहरहितेन्द्रारिश्चोरुसन्तोषितामरा।। १९

उदासीनोडुराड्वक्त्राऽप्युग्रकृत्यविदूषणी।
उपाधिरहितोपादानकारणोन्मत्तनृत्तकी॥ २०

उरुस्यन्दनसंबद्धकोट्यश्वोरुपराक्रमा।
उल्कामुखी ह्युमादेवी चोन्मत्तक्रोधभैरवी॥ २१

ओं ऐं ह्रीं श्रीं ऊं - ६

ऊर्जितज्ञोढभुवनकदम्बोर्ध्वमुखावलिः।
ऊर्ध्वप्रसारितांघ्रीशदर्शनोद्विग्नमानसा॥ २२

ऊहापोहविहीनोरुजितरंभामनोहरा।

ओं ऐं ह्रीं श्रीं ऋं - ७

ऋग्वेदसंस्तुता ऋद्धिदायिनी ऋणमोचिनी॥ २३

ऋजुमार्गपरप्रीता ऋषभध्वजभासुरा।
ऋद्धिकाममुनिव्रातसत्रयागसमर्चिता॥ २४

ओं ऐं ह्रीं ॠं - ८

ॠकारवाच्या ॠक्षादिवृता ॠकारनासिका।

ओं एं ह्रीं श्रीं लृं - ९

लृकरिणी लृकारोष्ठा

ओं ऐं ह्रीं श्रीं लृं - १०

लॄंवर्णाधरपल्लवा॥ २५

ओं ऐं ह्रीं श्रीं एं- ११

एकाकिन्येकमन्त्राक्षरैधितोत्साहवल्लभा।

ओं ऐं ह्रीं श्रीं ऐं- १२

ऐश्वर्यदात्री

ओं ऐं ह्रीं श्रीं ओं- १३

चोंकारवादिवागीशसिद्धिदा ।। २६

ओजःपुंजघनीसान्द्ररूपिण्योंकारमध्यगा ।

ओषधीशमनुप्रीता

ओं ऐं ह्रीं श्रीं औं- १४

चौदार्यगुणवारिधिः ।। २७

औपम्यरहिता चैव

ओं ऐं ह्रीं श्रीं अं- १५

अम्बुजासनसुन्दरी ।

अम्बराधीशनटनसाक्षिणी

ओं ऐं ह्रीं श्रीं अः - १६

अः पददायिनी ।। २८

ओं ऐं ह्रीं श्रीं कं - १७

कबरीबन्धमुखरीभ्रमरभ्रमरालका ।
करवाललताधाराभीषणा कौमुदीनिभा ।। २९

कर्पूराम्बा कालरात्रिः काली कलिविनाशिनी ।
कादिविद्यामयी काम्या काञ्चनाभा कलावती ।। ३०

कामेश्वरी कामराजमनुप्रीता कृपावती ।
कार्तवीर्यद्विसाहस्रदोर्दण्डपटहध्वनिः ।। ३१

किटिवक्त्राधिकारोद्यद्रणप्रोत्साहितांगना ।

कीर्तिप्रदा कीर्तिमती कुमारी कुलसुन्दरी। ३२

कुन्तायुधधरा कुब्जिकाम्बा कुध्रविहारिणी।
कुलागमरहस्यज्ञवाञ्छादानपरायणा। ३३

कूटस्थितिजुषी कूर्मपृष्ठजित्प्रपदान्विता।
केकाशब्दतिरस्कारिबाणासनमणीरवा॥ ३४

केशाकेशिच्चणा केशिराक्षसाधिपमर्दिनी।
कैतकच्छदसंध्याभपिशंगितकचाम्बुदा॥ ३५

कैलासोत्तुङ्गशृङ्गाग्रविलासेशपराजिता।
कैशिक्यारभटीरीतिस्तुतरक्तेश्वरीप्रिया। ३६

कोकाहितकरस्पर्धिनखा कोकिलवादिनी।
कोपहुंकारसंत्रस्तससेनासुरनायका॥ ३७

कोलाहलरवोद्रेकरिंखज्जम्बुकमण्डला।
कौण्डिन्यान्वयसंभूता करिचर्माम्बरप्रिया॥ ३८

कौपीनशिष्टविप्रर्षिस्तुता कौलिकदेशिका।
कौसुम्भास्तरणा कौलमार्गनिष्ठान्तरास्थिता॥ ३९

कङ्कणाहिगणक्षेमवचनोद्विग्नताक्ष्र्यका।
कंजाक्षी कंजविनुता कंजजातिप्रियङ्करी॥ ४०

ओं ऐं ह्रीं श्रीं खं - १८

खड्गखेटकदोर्दण्डा खट्वाङ्गी खड्गसिद्धिदा।
खण्डितासुरगर्वाद्रिःखलादृष्टस्वरूपिणी॥ ४१

खण्डेन्दुमौलिहृदया खण्डितार्केन्दुमण्डला।
खरांशुतापशमनी खस्था खेचरसंस्तुता॥ ४२

खेचरी खेचरीमुद्रा खेचराधीशवाहना ।
खेलापारावतरतिप्रीता खाद्यायितान्तका ।। ४३

ओं ऐं ह्रीं श्रीं गं- १९

गगना गगनान्तस्था गगनाकारमध्यमा ।
गजारूढा गजमुखी गाथागीतामरांगना ।। ४४

गदाधरी गदाऽऽघातमूर्च्छितानेकपासुरा ।
गरिमालघिमासिद्धिवृता ग्रामादिपालिनी ।। ४५

गर्विता गंधवसना गंधवाहसमर्चिता ।
गर्वितासुरदाराश्रुपङ्किताजिवसुन्धरा ।। ४६

गायत्री गानसंतुष्टा गंधर्वाधिपतीडिता ।
गिरिदुर्गा गिरीशानसुता गिरिवराश्रया ।। ४७

गिरीन्द्रक्रूरकठिनकर्षद्धलवरायुधा ।
गीतचारित्रहरितशुकैकगतमानसा ।। ४८

गीतिशास्त्रगुरुः गीतिहृदया गीर्गिरीश्वरी ।
गीर्वाणदनुजाचार्यपूजिता गृध्रवाहना ।। ४९

गुडपायससन्तुष्टहृद्गुप्ततरयोगिनी ।
गुणातीता गुरुर्गौरी गोप्त्री गोविन्दसोदरी ।। ५०

गुरुमूर्तिर्गुणाम्भोधिर्गुणागुणविवर्जिता ।
गुहेष्टदा गुहावासियोगिचिन्तितरूपिणी ।। ५१

गुह्यागमरहस्यज्ञा गुह्यकानन्ददायिनी ।
गुह्या गुह्यार्चिता गुह्यस्थानबिन्दुस्वरूपिणी । ५२

गोदावरीनदीतीरवासिनी गुणवर्जिता ।
गोमेदकमणीकर्णकुंडला गोपपालिनी ।। ५३

गोसवासक्तहृदया गोशृङ्गध्यानमोदिनी।
गंगागर्वंकषोद्युक्तरुद्रप्रोत्साहवादिनी ।। ५४

गन्धर्ववनितामालामोदिनी गर्वनाशिनी।
गुञ्जामणिगणप्रोतमालाभासुरकन्धरा ।। ५५

ओं ऐं ह्रीं श्रीं घं-२०

घटवाद्यप्रिया घोरकोणपघ्नी घटार्गला।
घटिका घटिकामुख्यषट्पारायणमोदिनी ।। ५६

घण्टाकर्णादिविनुता घनज्योतिर्लतानिभा।
घनश्यामा घटोद्भूततापसात्मार्थदेवता ।। ५७

घनसारानुलिप्तांगी घोणोद्धृतवसुन्धरा।
घनस्फटिकसंक्लृप्तसालान्तरकदम्बका ।। ५८

घनाल्युद्भेदशिखरगोपुरानेकमन्दिरा।
घूर्णिताक्षी घृणासिन्धुः घृणिविद्या घटेश्वरी ।। ५९

घृतकाठिन्यहृद्धण्टामणिमालाप्रसाधना।
घोरकृत्या घोरवाद्या घोराघौघविनाशिनी। ६०

घोरा घनकृपायुक्ता घननीलांबरान्विता।
घोरास्या घोरशूलाग्रप्रोतासुरकलेबरा ।। ६१

घोषत्रस्तान्तकभटा घोरसंघोषकृद्बला।

ओं ऐं ह्रीं श्रीं ङं -२१

ङान्तार्णाद्यमनुप्रीता ङाकारा ङींपरायणा ।। ६२

ङींकारिमंजुमंजीरचरणा ङाङ्कितांगुलिः।

ओं ऐं ह्रीं श्रीं चं-२२

चक्रवर्तिसमाराध्या चक्रनेमिरवोत्सुका ।। ६३

चण्डमार्ताण्डधिक्कारिप्रभा चक्राधिनायिका ।
चण्डालास्यपरामोदा चण्डवादपटीयसी ।। ६४

चण्डिका चण्डकोदण्डा चण्डघ्नी चण्डभैरवी ।
चतुरा चतुराम्नायशिरोलक्षितरूपिणी ।। ६५

चतुरङ्गबलोपेता चराचरविनोदिनी ।
चतुर्वक्त्रा चक्रहस्ता चक्रपाणिसमर्चिता ।। ६६

चतुष्षष्टिकलारूपा चतुष्षष्ट्यर्चनोत्सुका ।
चन्द्रमण्डलमध्यस्था चतुर्वर्गफलप्रदा ।। ६७

चमरीमृगयोद्युक्ता चिरंजीवित्वदायिनी ।
चम्पकाशोकस्रग्बद्धचिकुरा चरुभक्षिणी ।। ६८

चराचरजगद्धात्री चंद्रिकाधवलस्मिता ।
चर्माम्बरधरा चण्डक्रोधहुङ्कारभीकरा ।। ६९

चाटुवादप्रिया चामीकरपर्वतवासिनी ।
चापिनी चापमुक्तेषुच्छन्नदिग्भ्रान्तपन्नगा ।। ७०

चित्रभानुमुखी चित्रसेना चित्रांगदेष्टदा ।
चित्रलेखा चिदाकाशमध्यगा चिन्तितार्थदा ।। ७१

चिंत्या चिरंतनी चित्रा चित्राम्बा चित्तवासिनी ।
चैतन्यरूपा चिच्छक्तिश्चिदम्बरविहारिणी ।। ७२

चोरघ्नी चौर्यविमुखा चतुर्दशमनुप्रिया ।
ओं ऐं ह्रीं श्रीं छं-२३

छत्रचामरभृल्लक्ष्मीवागिन्द्राणीरतीवृता ।। ७३

छन्दश्शास्त्रमयी छन्दोलक्ष्या च्छेदविवर्जिता ।

छन्दोरूपा छन्दगतिः छन्दश्शिरविहारिणी ।। ७४

छद्महृत् छविसंदीप्तसूर्यचन्द्राग्नितारका ।
छर्दिताण्डावलिश्छादिताकारा छिन्नसंशया ।। ७५

छायापतिसमाराध्या छायाम्बा छत्रसेविता ।
छिन्नमस्तांबिका छिन्नशीर्षशत्रुश्छलान्तकी ।। ७६

छेदितासुरजिह्वाग्रा छत्रीकृतयशस्विनी ।

ओं ऐं ह्रीं श्रीं जं-२४

जगन्माता जगत्साक्षी जगद्योनिर्जगद्गुरुः ।। ७७

जगन्माया जगद्बृन्दवन्दिता जयिनी जया ।
जनजाड्यप्रतापघ्नी जितासुरमहाव्रजा ।। ७८

जननी जगदानन्ददात्री जह्नुसमर्चिता ।
जपमालावराभीतिमुद्रापुस्तकधारिणी ।। ७९

जपयज्ञपराधीनहृदया जगदीश्वरी ।
जपाकुसुमसंकाशा जन्मादिध्वंसकारणा ।। ८०

जालंध्रपूर्णकामोड्याणचतुष्पीठरूपिणी ।
जीवनार्थिद्विजव्रातत्राणनाबद्धकङ्कणा ।। ८१

जीवब्रह्मैकताकांक्षिजनताकीर्णपार्श्वभूः ।
जम्भिनी जम्भभित्पूज्या जाग्रदादित्रयातिगा ।। ८२

चलदग्निधरा ज्वालाप्रोच्चकेशी ज्वरार्तिहृत् ।
ज्वालामालिनिका ज्वालामुखी जैमिनिसंस्तुता ।। ८३

ओं ऐं ह्रीं श्रीं झं-२५

झलंझलकृतस्वर्णमंजीरा झषलोचना ।

झषकुण्डलिनी झल्लरीवाद्यमुदिताननना ॥ ८४

झषकेतुसमाराध्या झषमांसान्नभक्षिणी।
झषोपद्रवकृद्धन्त्री झ्म्रूंमन्त्राधिदेवता ॥ ८५

झंझानिलातिगमना झषराण्णीतसागरा।

ओं ऐं ह्रीं श्रीं झं- २६

ज्ञानमुद्राधरा ज्ञानिहृत्पद्मकुहरास्थिता ॥ ८६

ज्ञानमूर्तिर्ज्ञानगम्या ज्ञानदा ज्ञातिवर्जिता।
ज्ञेया ज्ञेयादिरहिता ज्ञात्री ज्ञानस्वरूपिणी ॥ ८७

ओं ऐं ह्रीं श्रीं टं- २७

टङ्कपुष्पालिस्रङ्मंजुकन्धरा टंकिताचला।
टङ्कवेत्रादिकानेकशस्त्रभृद्दोर्लतावलिः ॥ ८८

ओं ऐ ह्रीं श्रीं ठं- २८

ठकारनिभवक्षोजद्वयाधोवृत्तभासुरा।
ठकारांकितजान्वग्रजितकोरकितांबुजा ॥ ८९

ओं ऐं ह्रीं श्रीं डं- २९

डाकिनी डामरीतन्त्ररूपा डाडिमपाटला।
डंबघ्नी डंबराऽऽडंबरोन्मुखी डमरुप्रिया ॥ ९०

डिंबदानचणा डोलामुदिता डुंठिपूजिता।

ओं एं ह्रीं श्रीं ढं- ३०

ढक्कानिनदसन्तुष्टशिखिनृत्तसमुत्सुका ॥ ९१

ओं ऐं ह्रीं श्रीं णं- ३१

णकारपञ्जरशुकी णकारोद्यानकोकिला।

ओं ऐं ह्रीं श्रीं तं- ३२

तत्वातीता तपोलक्ष्या तप्तकांचन सन्निभा ।। ९२

तन्त्री तत्वमसीवाक्यविषया तरुणीवृता।
तर्जन्यंगुष्ठसंयोगज्ञानब्रह्ममुनीश्वरा ।। ९३

तर्जितानेकदनुजा तक्षकी तडितालिभा।
ताम्रचूडध्वजोत्संगा तापत्रयविनाशिनी ।। ९४

ताराम्बा तारकी तारापूज्या ताण्डवलोलुपा।
तिलोत्तमादिदेवस्त्रीशारीरोत्सुकमानसा ।। ९५

तिल्वद्रुसंकुलाभोगकान्तारान्तरवासिनी।
त्रयीद्विड्रसनारक्तपानलोलासिधारिणी ।। ९६

त्रयीमयी त्रयीवेद्या त्र्यय्यन्तोद्गीतवैभवा।
त्रिकोणस्था त्रिकालज्ञा त्रिकूटा त्रिपुरेश्वरी ।। ९७

त्रिचत्वारिंशदश्रांकचक्रान्तर्बिन्दुसंस्थिता।
त्रितारा तुंबुरूद्गीता ताक्ष्याकारा त्रिकाग्निजा ।। ९८

त्रिपुरा त्रिपुरध्वंसिप्रिया त्रिपुरसुन्दरी।
त्रिस्था त्रिमूर्तिसहजशक्तिस्त्रिपुरभैरवी ।। ९९

ओं ऐं ह्रीं श्रीं थं- ३३

थां थीकरमृदंगादि भृङ्गिष्णुमुखसेविता।
थां थीं तक् तक थिं तो कृत्तालध्वनिसभांगणा ।। १००

ओं ऐं ह्रीं श्रीं दं- ३४

दक्षा दाक्षायणी दक्षप्रजापतिमखान्तकी।
दक्षिणाचाररसिका दयासंपूर्णमानसा ।। १०१

दारिद्र्योन्मूलिनी दानशीला दोषविवर्जिता।
दारुकान्तकरी दारुकारण्यमुनिमोहिनी ।। १०२

दीर्घदंष्ट्राननना दीर्घरसनागीर्णदानवा।
दीक्षिता दीक्षिताराध्या दीनसंरक्षणोद्यता ।। १०३

दुःखाब्धिबडबा दुर्गा दुम्बीजा दुरितापहा।
दुष्टदूरा दुराचारशमनी द्यूतवेदिनी ।। १०४

द्विजावगूरणस्वान्तपिशितामोदिताण्डजा।

ओं ऐं ह्रीं श्रीं धं- ३५

धनदा धनदाराध्या धनदासकुटुम्बिनी ।। १०५

धराधरात्मजा धर्मरूपा धरणिधूर्धरा।
धात्री धातृशिरश्छेत्री धीध्येया ध्रुवपूजिता ।। १०६

धूमावती धूम्रनेत्रगर्वसंहारिणी धृतिः ।

ओं ऐं ह्रीं श्रीं नं- ३६

नखोत्पन्नदशाकारमाधवा नकुलीश्वरी ।। १०७

नरनारायणस्तुत्या नलिनायतलोचना।
नरास्थिस्रग्धरा नारी नरप्रेतोपरिस्थिता ।। १०८

नवाक्षरीनाममन्त्रजपप्रीता नटेश्वरी।
नादचामुण्डिका नानारूपकृन्नास्तिकान्तकी। १०९

नादब्रह्ममयी नामरूपहीना नतानना।
नारायणी नन्दिविद्या नारदोद्गीतवैभवा। ११०

निगमागमसंवेद्या नेत्री नीतिविशारदा।
निर्गुणा नित्यसंतुष्टा नित्याषोडशिकावृता ।। १११

नृसिंहदर्पशमनी नरेन्द्रगणवन्दिता।
नौकारूढासमुत्तीर्णभवांभोधिनिजाश्रिता। ११२

ओं ऐं ह्रीं श्रीं पं- ३७

परमा परमं ज्योतिः परब्रह्ममयी परा।
परापरमयी पाशबाणांकुशधनुर्धरा।। ११३

पराप्रासादमन्त्रार्था पतञ्जलिसमर्चिता।
पापघ्नी पाशरहिता पार्वती परमेश्वरी।। ११४

पुण्या पुलिन्दिनीपूज्या प्राज्ञा प्रज्ञानरूपिणी।
पुरातना पराशक्तिः पञ्चवर्णस्वरूपिणी।। ११५

प्रत्यंगिराः पानपात्रधरा पीनोन्नतस्तनी।

ओं ऐं ह्रीं श्री फं- ३८

फडर्णध्वस्तपापौघदासा फणिवरेडिता।। ११६

फणिरत्नासनासीनकामेशोत्संगवासिनी।
फलदा फल्गुनप्रीता फुल्लाननसरोरुहा।। ११७

फुल्लोत्तमांगसाहस्रदलपङ्कजभासुरा।

ओं ऐं ह्रीं श्रीं बं- ३९

बन्धूकसुमनोरागा बादरायणदेशिका।। ११८

बालाम्बा बाणकुसुमा बगलामुखिरूपिणी।
बिन्दुचक्रस्थिता बिन्दुतर्पणप्रीतमानसा।। ११९

बृहत्सामस्तुता ब्रह्ममाया ब्रह्मर्षिपूजिता।
बृहदैश्वर्यदा बंधहीना बुधसमर्चिता।। १२०

ब्रह्मचामुण्डिका ब्रह्मजननी ब्राह्मणप्रिया।
ब्रह्मज्ञानप्रदा ब्रह्मविद्या ब्रह्माण्डनायिका।। १२१

ब्रह्मतालप्रिया ब्र... श्रमश्वकशायिनी।
ब्रह्मादिविनुता ब्रह्मपत्नी ब्रह्मपुरस्थिता ॥ १२२

ब्राह्मीमाहेश्वरीमुख्यशक्तिबृन्दसमावृता।

ओं ऐं ह्रीं श्रीं भं-४०

भगाराध्या भगवती भार्गवी भार्गवार्चिता ॥ १२३

भण्डासुरशिरश्छेत्री भाषासर्वस्वदर्शिनी।
भद्रा भद्रार्चिता भद्रकाली भर्गस्वरूमिणी ॥ १२४

भवानी भाग्यदा भीमा भामती भीमसैनिका।
भुजङ्गनटनोद्युक्ता भुजनिर्जितदानवा ॥ १२५

भ्रुकुटीक्रूरवदना भ्रूमध्यनिलयस्थिता।
भेतालनटनप्रीता भोगिराजांगुलीयका ॥ १२६

भेरुण्डा भेदनिर्मुक्ता भैरवी भैरवार्चिता।

ओं ऐं ह्रीं श्रीं मं-४१

मणिमण्डपमध्यस्था माणिक्याभरणान्विता ॥ १२७

मनोन्मनी मनोगम्या महादेवपतिव्रता।
मन्त्ररूपा महाराज्ञी महासिद्धालिसंवृता ॥ १२८

मन्दरादिकृतावासा महादेवी महेश्वरी।
महाब्धिमेखला मार्गदुर्गा मांगल्यदायिनी ॥ १२९

महाव्रतक्रतुप्रीता माणिभद्रसमर्चिता।
महिषासुरशिरश्छेदनर्तकी मुण्डखण्डिनी ॥ १३०

माता मरकतश्यामा मातंगी मतिसाक्षिणी।
माधवी माधवाराध्या मधुमांसप्रिया मही ॥ १३१

मारी मारान्तक क्षोभकारिणी मीनलोचना।
मालतीकुन्दमालाढ्या माषौदनसमुत्सुका ।। १३२

मिथुनासक्तहृदया मोहिताशेषविष्टपा।
मुद्रा मुद्राप्रिया मूर्खनाशिनी मेषभक्षिणी ।। १३३

मूकांबा मुखजामोदजनकालोकनप्रिया।
मौनव्याख्यापरा मौनसत्यचिन्मात्रलक्षणा ।। १३४

मौंजीकच्छधरा मौर्वीद्विरेफमुखरोन्मुखा।

ओं ऐं ह्रीं श्रीं यं- ४२

यज्ञबृन्दप्रिया यष्ट्री यान्तवर्णस्वरूपिणी ।। १३५

यन्त्ररूपा यशोदात्मजातसन्नुतवैभवा।
यशस्करी यमाराध्या यजमानाकृतिर्यतिः ।। १३६

याकिनीयक्षरक्षादिवृता यजनतर्पणा।
याथार्थ्यविग्रहा योग्या योगिनी योगनायिका ।। १३७

यामिनी यजनोत्साहा यामिनीचरभक्षिणी।
यायजूकार्चितपदा यज्ञेशी यक्षिणीश्वरी ।। १३८

यासापद्मधरा यासापद्मान्तरपरिष्कृता।
योषाऽभयंकरी योषिद्वृन्दवन्दितपादुका ।। १३९

ओं ऐं ह्रीं श्रीं रं- ४३

रक्तचामुण्डिका रात्रिदेवता रागलोलुपा।
रक्तबीजप्रशमनी रजोगंधनिवारिणी ।। १४०

रणरंगनटी रत्नमंजीरचरणांबुजा।
रजध्वस्ताचला रागहीनमानसहंसिनी ।। १४१

रसनालेपितक्रूररक्तबीजकलेबरा।
रक्षाकरी रमा रम्या रञ्जिनी रसिकावृता ॥ १४२

राकिण्यम्बा रामनुता रमावाणीनिषेविता।
रागालापपरब्रह्म शिरो मालाप्रसाधना ॥ १४३

राजराजेश्वरी राज्ञी राजीवनयनप्रिया।
राजव्रातकिरीटांशुनीराजितपदांबुजा ॥ १४४

रुद्रचामुण्डिका रुक्मसदृशा रुधिरप्रिया।
रुद्रताण्डवसामर्थ्यदर्शनोत्सुकमानसा ॥ १४५

रुद्राट्टहाससंक्षुभ्यज्जगत्सृष्टिविधायिनी।
रुद्राणी रुद्रवनिता रुरुराजहितैषिणी ॥ १४६

रेणुका रेणुकासूनुस्तुत्या रेवाविहारिणी।
रोगघ्नी रोषनिर्दग्धशत्रुसेनानिवेशिनी ॥ १४७

रोहिणीशांशुसंभूतझरीरत्नवितानका।
रौद्री रौद्रास्त्रनिर्दग्धराक्षसा राहुपूजिता ॥ १४८

ओं ऐं ह्रीं श्रीं लं- ४४

लघूक्तिवल्गुस्तिमितवाणीत्यक्तविपञ्चिका।
लज्जावती ललत्प्रोच्चकेशा लम्बिपयोधरा ॥ १४९

लयादिकर्त्री लोमालिलतानाभीसरःकटी।
ललदोष्ठदलद्वन्द्ववदना लक्ष्यदूरगा ॥ १५०

ललन्तिकामणीभास्वन्निटिलश्रीमुखांबुजा।
ललाटार्धनिशानाथकलंकोद्भासिलोचना ॥ १५१

ललिता लोभिनी लोभहीना लोकेश्वरी लघुः।
लक्ष्मीर्लक्ष्मीशसहजा लक्ष्मणाग्रजवन्दिता ॥ १५२

लाकिनी लंघिताम्भोधिनिवहा ललिताम्बिका ।
लाजहोमप्रिया लम्बमुक्ताभासुरनासिका ।। १५३

लाभालाभादिरहिता लास्यदर्शनकोविदा ।
लावण्यदर्शनोद्विग्नरतीशा लघुभाषिणी ।। १५४

लाक्षारसाञ्चितपदा लघुश्यामा लतातनुः ।
लाक्षालक्ष्मीतिरस्कारियुगलाधरपल्लवा ।। १५५

लीलागतिपराभूतहंसा लीलाविनोदिनी ।
लीलानन्दनकल्पद्रुलताडोलाविहारिणी ।। १५६

लीलापीताब्धिविनुता लीलास्वीकृतविग्रहा ।
लीलाशुकोक्तिमुदिता लीलामृगविहारिणी ।। १५७

लोकमाता लोकसृष्टिस्थितिसंहारकारिणी ।
लोकातीतपदा लोकवन्द्या लोकैकसाक्षिणी ।। १५८

लोकातीताकृतिर्लब्ध मार्गत्यागपरान्तकी ।
लोकानुल्लंघितनिजशासना लब्धविग्रहा ।। १५९

लोमावलिलतालंबिस्तनयुग्मनतानना ।
लोलचित्तविदूरस्था लोमलम्ब्यंडजालका ।। १६०

लंबितारिशिरोहस्ता लोकरक्षापरायणा ।

ओं ऐं ह्रीं श्रीं वं- ४५

वनदुर्गा विन्ध्यशैलवासिनी वामकेश्वरी ।। १६१

वशिन्यादिस्तुता वह्निज्वालोद्गारिमुखी वरा ।
वक्षोजययुग्मविरहासहिष्णुकरशंकरा ।। १६२

वाङ्मनोतीतविषया वामाचारसमुत्सुका ।
वाजपेयाध्वरानन्दा वासुदेवेष्टदायिनी ।। १६३

वादित्रध्वनिसंभ्रान्तदिग्गजालिर्विधीडिता।
वामदेववसिष्ठादिपूजिता वारिदप्रभा॥ १६४

वामस्तनाश्लिषद्धस्तपद्मशंभुविहारिणी।
वाराही वास्तुमध्यस्था वासवान्तः पुरेष्टदा॥ १६५

वारांगनानीतपूर्णकुंभदीपालिमंटपा।
वारिजासनशीर्षालिमाला वार्धिसरोवरा॥ १६६

वारितासुरदर्पश्रीः वार्ध(र्त्रे)घ्नीमन्त्ररूपिणी।
वार्तालीः वारुणी विद्या वरुणारोग्यदायिनी। १६७

विजया विजयास्तुत्या विरूपा विश्वरूपिणी।
विप्रशत्रुकदम्बघ्नी विप्रपूज्या विषापहा॥ १६८

विरिञ्चिशिक्षणोद्युक्तमधुकैटभनाशिनी।
विश्वमाता विशालाक्षी विरागा वीशवाहना॥ १६९

वीतरागवृता व्याघ्रपाद नृत्तप्रदर्शिनी।
वीरभद्रहतोन्मत्तदक्षयज्ञाश्रितामरा॥ १७०

वेदवेद्या वेदरूपा वेदाननसरोरुहा।
वेदान्तविषया वेणुनादज्ञा वेदपूजिता। १७१

वौषण्मन्त्रमयाकारा व्योमकेशी विभावरी।
वन्द्या वाग्वादिनी वन्यमांसाहारा वनेश्वरी॥ १७२

वाञ्छाकल्पलता वाणी वाक्प्रदा वागधीश्वरी।

ओं ऐं ह्रीं श्रीं शं- ४६

शक्तिबृन्दावृता शब्दमयी श्रीचक्ररूपिणी॥ १७३

शबरी शबरीदुर्गा शरभेशाच्छदाकृतिः।
शब्दजालोद्भवङ्कारवासंदिग्धतापसा॥ १७४

शरणागतसंत्राणपरायणपटीयसी ।
शशांकशेखरा शस्त्रधरा शतमुखांबुजा ।। १७५

शातोदरी शान्तिमती शरच्चन्द्रनिभानना ।
शापापनोदनचणा शंकादोषादिनाशिनी ।। १७६

शिवकामसुन्दरी श्रीदा शिववामाङ्गवासिनी ।
शिवा श्रीदाननिपुणलोचना श्रीपतिप्रिया ।। १७७

शुकादिद्विजबृन्दोक्तिस्तब्धमानसगीष्पतिः ।
शुक्रमंडलसंकाशमुक्तामाला शुचिस्मिता ।। १७८

शुक्लदंष्ट्राग्रसंदीप्तपातालभ्रान्तपन्नगा ।
शुभ्रासना शूरसेनावृता शूलादिनाशिनी ।। १७९

शूकवृश्चिकनागाखुवृकहिंस्रालिसंवृता ।
शूलिनी शूलखड्गाहिशङ्खचक्रगदाधरा ।। १८०

शोकाब्धिशोषणोद्युक्तबडबा श्रोत्रियावृता ।
शङ्करालिङ्गनानन्दमेदुरा शीतलाम्बिका ।। १८१

शाङ्करी शङ्करार्धांगहरा शाकरवाहना ।
शंभुकोपाग्निनिर्दग्धमदनोत्पादकेक्षणा ।। १८२

शांभवी शंभुहस्ताब्जलीलारुणकरावलिः ।
श्रीविद्या शुभदा शुभ्रवस्त्रा शुंभासुरान्तकी ।। १८३

ओं ऐं ह्रीं श्रीं षं- ४७

षडाधाराब्जनिलया षाड्गुण्यश्रीप्रदायिनी ।
षडूर्मिघ्नी षडध्वान्तपदारूढस्वरूपिणी ।। १८४

षट्कोणमध्यनिलया षडर्णा षान्तरूपिणी ।
षड्जादिस्वरनिर्मात्री षडङ्गयुवतीश्वरी ।। १८५

षड्भावरहिता षंडकंटकी षण्मुखप्रिया।
षड्रसास्वादमुदिता षष्ठीशादिमदेवता ॥ १८६

षोढान्यासमयाकारा षोडशाक्षरदेवता।

ओं ऐं ह्रीं श्रीं सं- ४८

सकला सच्चिदानन्दलक्षणा सौख्यदायिनी ॥ १८७

सनकादिमुनिध्येया सन्ध्यानाट्यविशारदा।
समस्तलोकजननी सभानटनरंजिनी ॥ १८८

सरः पुलिनलीलार्थियुवतीनिवहोत्सुका।
सरस्वती सुराराध्या सुरापानप्रियासुरा ॥ १८९

सरोजलविहारोद्यत्प्रियाकृष्टोत्तरांशुका।
साध्या साध्यादिरहिता स्वतन्त्रा स्वस्तिरूपिणी ॥ १९०

साध्वी संगीतरसिका सर्वदा सर्वमङ्गला।
सामोद्गीतनिजानन्दमहिमालिस्सनातना ॥ १९१

सारस्वतप्रदा सामा संसारार्णवतारिर्णी।
सावित्री सङ्गनिर्मुक्ता सतीशी सर्वतोमुखी ॥ १९२

सांख्यतत्वज्ञनिवहव्यापिसाला सुखेश्वरी।
सिद्धसंघावृता साध्यवन्दिता साधुसत्कृता ॥ १९३

सिंहासनगता सर्वश्रृङ्गाररसवारिधिः।
सुधाब्धिमध्यनिलया स्वर्णद्वीपान्तरस्थिता ॥ १९४

सुधासिक्तालवालोद्यत्कायमानलतागृहा।
सुभगा सुन्दरी सुभ्रूः समुपास्यत्वलक्षणा ॥ १९५

सुरद्रुसंकुलाभोगतटा सौदामिनीनिभा।
सुरभीकेशसंभ्रान्तद्विरेफमुखरान्विता ॥ १९६

सूर्यचन्द्रांशुधिक्कारिप्रभारत्नालिमण्डपा।
सोमपानोद्भवामोदविप्रगीतापदानका।। १९७

सोमयागप्रिया सोमसूर्यवह्निविलोचना।
सौगन्धिकमरुद्वेगमोदिता सद्विलासिनी।। १९८

सौन्दर्यमोहिताधीनवल्लभा सन्ततिप्रदा।
सौभाग्यमन्त्रिणी सत्यवादा सागरमेखला।। १९९

स्वश्वासोच्छ्वासभुवनमोचनोन्मोचना स्वधा।
ओं ऐं ह्रीं श्रीं हं- ४९

हयारूढा हयग्रीवविनुता हतकिल्बिषा।। २००

हरालिङ्गनशीतांशून्मिषन्नेत्रकुमुद्वती।
हरिनाभिसमुद्भूतविरिंचिविनुता हरा।। २०१

हादिविद्या हानिहीना हाकिनी हरिचण्डिका।
हारावलिप्रभादीप्तहरिदन्तदिगम्बरा।। २०२

हालाहलविषोद्विग्नविष्टापानेकरक्षकी।
हाहाकाररवोद्गीतदनुजा हारमंजुला।। २०३

हिमाद्रितनया हीरमकुटा हारपन्नगा।
हुताशनधरा होमप्रिया होत्री हयेश्वरी।। २०४

हेमपद्मधरा हेमवर्मराजसमर्चिता।
हंसिनी हंसमन्त्रार्था हंसवाहा हरांगभृत्।। २०५

हृद्या हृद्यमनोनित्यवासा हरकुटुंबिनी।
ह्रीमतिः हृदयाकाशतरणिः ह्रींपरायणा।। २०६

ओं ऐं ह्रीं श्री क्षं- ५०

क्षणदाचरसंहारचतुरा क्षुद्रदुर्मुखा ।
क्षणदार्च्या क्षपानाथसुधार्द्रकबरी क्षितिः ।। २०७

क्षमा क्षमाधरसुता क्षामक्षोभविनाशिनी ।
क्षिप्रसिद्धिंप्रदा क्षिप्रगमना क्षुण्णिवारिणी ।। २०८

क्षीणपुण्यासुहृत् क्षीरवर्णा क्षयविवर्जिता ।
क्षीरान्नाहारमुदिता क्ष्म्र्र्यूंमन्त्राप्तेष्टयोगिराट् ।। २०९

क्षीराब्धितनया क्षीरघृतमध्वासवार्चिता ।
क्षुधार्तिदीनसंत्राणा क्षितिसंरक्षणक्षमा ।। २१०

क्षेमंकरी क्षेत्रपालवन्दिता क्षेत्ररूपिणी ।
क्षौमाम्बरधरा क्षत्रसंप्रार्थितजयोत्सवा ।। २११
क्ष्वेलभुग्रसनास्वाद जात वाग्रसवैभवा ।

इति श्रीभृंगिरिटिसंहितायां शक्त्युत्कर्षप्रकरणे
शिवगौरीसंवादे श्रीशिवकामसुन्दरीसहस्रनामस्तोत्रं संपूर्णम्

## ।। उत्तरपीठिका ।।

इत्येतत्ते मयाऽऽख्यातं नाम साहस्रमुत्तमम् ।
शिवकामसुन्दरीदेव्याः शिवायाः परमेश्वरि ।। १

चतुर्वेदस्य तात्पर्यसारभूतं सुखप्रदम् ।
सहस्रनामक स्तोत्ररत्नाभिधमिदं प्रिये ।
श्रुत्यन्तवाक्यनिचयबद्धं शीघ्रप्रसिद्धिदम् ।। २

आयुरारोग्यदं पुण्यवर्धनं भुक्तिमुक्तिदम् ।
विघ्नवारणविघ्नेशं संसारध्वान्तभास्करम् ।। ३

शोककान्तारदावाग्निमज्ञानाब्धिघटोद्भवम् ।
रोगपर्वतदम्भोलिं शत्रुवर्गाहिताक्ष्र्यकम् ।। ४

सर्वविद्याप्रदं नृणां तुष्टिदं पुष्टिदं प्रिये ।
भूताः प्रेताः पिशाचाश्च ब्रह्मरक्षोगणोरगाः ।। ५

जटामुनिगणाः क्षुद्रज्वरकृद्ग्रहमण्डलाः ।
कोटरारेवतीज्येष्ठापूतनामातृकादयः ।। ६

महाज्वरकराश्चान्ये भेतालाग्निधराशिवे ।
अपस्मारादिमाश्चान्ये दृष्टा हिंसापराशिवे ।। ७

राक्षसा मनुजा यज्ञविघ्नभूताश्च पन्नगाः ।
सालुवाः शरभाः सिंहाः व्याघ्रा ऋक्षा गजा वृषाः ।। ८

शाकरा महिषाश्छगाः गवयावृकजंबुकाः ।
अन्ये वन्या मृगा देवि हिंसकाश्शूकवृश्चिकाः ।। ९

अण्डजास्स्वेदजा देवि चोद्भिदाश्च जरायुजाः ।
ये ये हिंसाकरास्सर्वे नामसाहस्रजापिनम् ।। १०

दृष्ट्वा भीत्या परिभ्रान्ताः स्खलन्तश्च विदूरतः ।
पतन्तश्च पलायन्ते प्राणत्राणपरायणाः ।। ११

अंबिकानामसाहस्रजपशीलस्य योगिनः ।
द्रव्याणि योऽपहरते तं भक्षयति यो गिनी ।। १२

शिवकामसुन्दरीभक्तिशालिनं द्वेष्टि यो नरः ।
तं नाशयति सा देवी सपुत्रगणबान्धवम् ।। १३

शिवकामसुन्दरीभक्ते चाभिचारादिदुष्कृतिम् ।
यः प्रेरयति मूढात्मा तं देवी शिवसुन्दरी ।। १४

मुखाग्निज्वालया देवी दाहयत्यंजसा ध्रुवम् ।
अनेन सदृशं स्तोत्रं नास्ति नास्त्यद्रिकन्यके ।। १५

एतत्स्तोत्रजपेनैव विष्णुर्लक्ष्मीश्वरोऽभवत्।
जगद्रक्षककर्तृत्वं ब्रह्मणो वेधसः प्रिये ।। १६

सृष्टिकर्तृत्वमप्यम्बे वेदानां च विधायकः ।
अभूदन्येऽमराश्चैव वह्नीन्द्रयमराक्षसाः ।। १७

जलवाय्वीशधनदाः योगिनश्च महर्षयः ।
जपादस्य स्वयं सिद्धिं लेभिरे सततं शिवे ।। १८

मम शक्तिमयी त्वं हि देवी सा कामसुन्दरी ।
तस्याः प्रभावं नान्येन वक्तुं शक्यं हि सुन्दरि ! ।। १९

त्वयैव चिन्तनीयं तत् त्वत्तो नान्यास्ति हि प्रिया ।
एतन्नामसहस्रस्य जपे त्रैवर्णिकः प्रिये ।। २०

मयाधिक्रियतेऽन्येषां न भवेदधिकारता ।
अन्ये तु पाठयेद्विप्रैः लभेरन्स्वेष्टकामनाम् ।। २१

यो विप्रश्शान्तहृदयः नामसाहस्रमुत्तमम् ।
जपति श्रद्धया युक्तः सर्वान्कामानवाप्नुयात् ।। २२

शुक्रवारे सौमवारे भौमवारे गुरोर्दिने ।
दर्शे पर्वणि पञ्चम्यां नवम्यां कुलसुन्दरि ! ।। २३

कृष्णांगारचतुर्दश्यां संक्रान्तावयने विषौ ।
वृषे शुक्लनवम्यां च श्रावण्यां मूलभे शुभे ।। २४

आषाढे च तुलायां च नक्षत्रे पूर्वफल्गुने ।
ज्येष्ठे च फाल्गुने मासि उत्तरे फल्गुने शुभे ।। २५

नक्षत्रे च शुभां देवीं गौरीनामभिरंबिकाम् ।
अर्चयेत्सततं प्रीता सुन्दरी भवति प्रिये ।। २६

प्रतिपन्मुखराकान्तदिनरात्रिषु चाम्बिकाम् ।
अर्चयेत्कुसुमैर्बिल्वैः हारिद्रैः कुंकुमैः शुभैः ।। २७

हरिद्राचूर्णसंपृक्तैरक्षतैर्तुलसीदलैः ।
केसरैः केतकैश्चैव मन्दारैश्चम्पकैरपि ।। २८

प्रथमं गंधतैलेनाभिषिच्य ततः परम् ।
पयसा मधुना दध्ना घृतेन लिकुचेन च ।। २९

नारिकेलाम्रपनसकदलीनां फलत्रयम् ।
शर्करामधुसंपृक्तं पञ्चामृतमथांबिकाम् ।। ३०

अभिषिच्य ततः पश्चात्सगन्धैश्चन्दनैः शुभैः ।
अन्नैश्च कुंकुमैश्चैव फलानां च रसैस्तथा ।। ३१

गङ्गाम्बुभिस्ततः कुर्यात् वासितैः सलिलैश्शुभैः ।
सम्यगुन्मार्ज्य वस्त्रैश्च पीताम्बरमुखैः शिवैः ।। ३२

आच्छाद्य कञ्चुकैश्चैवालंकृत्याभरणैस्सुमैः ।
शुद्धान्नैः पायसान्नैश्च रसखण्डान्नैश्च भक्ष्यकैः ।। ३३

गुडान्नैः पायसापूपैर्माषापूपैश्च लेह्यकैः ।
खाद्यैश्च विविधैरन्नैः चित्रान्नैश्च विशेषतः ।। ३४

लड्डुकैर्मोदकैश्चापि करम्भैश्च शरावकैः ।
फलैश्च विविधैश्चापि कुर्यान्नैवेद्यमादरात् ।। ३५

षोडशैरुपचारैश्च पूजयेच्छिवसुन्दरीम् ।
सुवासिनीः कन्यकाश्च वस्त्रान्नैश्च प्रपूजयेत् ।। ३६

एभिर्नामभिरेवैतां मूर्ते यन्त्रे घटेऽपि वा ।
आवाह्याभ्यर्च्ययेद्देवीं जपेद्वा सन्निधौ स्तुतिम् ।। ३७

यं यं कामयते शीघ्रं तं तं प्राप्नोत्यसंशयः ।
विद्यार्थी लभते विद्यां पुत्रार्थी पुत्रमाप्नुयात् ।। ३८

कन्यार्थी लभते कन्यां अप्सरस्सदर्शी शिवे ।
धनार्थी लभते शीघ्रं धनं भूरि महेश्वरि ।। ३९

श्रीविद्योपास्तिशीलानामात्मरक्षार्थमादरात्।
शत्रुनिर्घातनार्थश्च स्वदासानुग्रहाय च ।। ४०

जप्तव्यं सततं भद्रे श्रुतिवद्वाग्यतश्शुचिः ।
सर्वमन्त्राधिकारत्वात् श्रीविद्योपासकस्य तु ।। ४१

विना गुरुं स्वयं जप्यं सुन्दर्येवास्य देशिका ।
तेषामेव विधिः प्रोक्तो नान्येषां मेनकात्मजे ।। ४२

उपदेशादेव च गुरोः जप्तव्यं शिवभाषितम्।
श्रीचक्रपुरसम्राजस्त्रिपुरातुष्टिकारणम्।। ४३

तत्त्वमस्यादिवाक्यार्थपरब्रह्मपदप्रदम्।
शिवज्ञानप्रदं देवि शीघ्रसिद्धिकरं परम्।। ४४

श्रौतस्मार्तादिकर्मादौ भक्त्येदं यो जपेत्प्रिये ।
अविघ्नेन च तत्कर्म साफल्यं चैति निश्चयः ।। ४५

युद्धे प्रयाणे दुर्द्धर्षे स्वप्ने वाते जले भये ।
जप्तव्यं सततं भद्रे तत्तच्छान्त्यै महेश्वरि ।। ४६

तत्तन्मातृकया युक्तं त्रितारेण समन्वितम्।
स्तोत्रमेतज्जपेद्देवीमर्चयेच्च विशेषतः ।। ४७

सदा तस्य हृदम्भोजे सुन्दरी वसति ध्रुवम्।
अणिमादिमहासिद्धीः लभते नात्र संशयः ।। ४८

अश्वमेधादिभिर्यज्ञैः यत्फलं तत् सुदुर्लभम्।
सकृदस्यावर्तनतः प्राप्नोत्येव न संशयः ।। ४९

एभिर्नामभिरेवं यः कालीं दुर्गांच चण्डिकाम्।
अर्चयेत्सततं भक्त्या ये सर्वान्कामांल्लभेन्नरः ।। ५०

सुन्दरीमूर्तिभेदाश्च काली दुर्गाच चण्डिका। ५१

एकैव शक्तिः परमेश्वरस्य
भिन्ना चतुर्धा विनियोगकाले।
भोगे भवानी पुरुषेषु विष्णुः
कोपेषु काली समरेषु दुर्गा ।। ५२

एका शक्तिश्च शंभोर्विनिमयनविधौ सा चतुर्धा विभिन्ना
क्रोधे काली विजाताच समरसमये सा च चण्डी च दुर्गा।
भोगे सृष्टौ नियोगे च सकलजगतां सा भवानीच जाता
सर्वेषां रक्षणानुग्रहकरणविधौ तस्य विष्णुर्भवेत्सा ।। ५२

संप्रयच्छति तस्येष्टमचिरादेव सुन्दरी।
स्तोत्ररत्नमिदं भद्रे सदा निष्कामनायुतः ।। ५३

यो जपेन्मामकं धाम ब्रह्मविष्ण्वादिदुर्लभम्।
सत्यज्ञानमनन्ताख्यं ब्राह्मं कैवल्यसंज्ञकम् ।। ५४

भवाब्धितारकं सोऽपि प्राप्नोति मदनुग्रहात्।
चित्सभायां नृत्यमाननटराजस्य साक्षिणी ।। ५५

तस्यैव महिषी नाम्ना शिवकामा च सुन्दरी।
सा परब्रह्ममहिषी सदानन्दा शुभप्रदा ।। ५६

शिवकामसुन्दरीनाम्नां सहस्रं प्रोक्तमम्बिके।
एतस्य सदृशं स्तोत्रं नास्ति नास्ति जगत्त्रये ।। ५७

सत्यं सत्यं पुनस्सत्यं त्वां शपेऽहं वदामि ते।
नास्तिकाय कृतघ्नाय विप्रद्वेषपराय च ।। ५८

न देयं, वेदविप्रर्षिभक्तियुक्ताय शांभवि।
देयं त्रिपुरविद्येशीत्यथर्वश्रुति चोदितम् ।। ५९

विस्तृतेन किमन्यच्च श्रोतुकामासि सुन्दरि ।

इति निगदितवन्तं राजते पर्वतेस्मिन्
नवमणिगणपीठे संस्थितं देवमीशम् ।
मुहुरपि कृतनम्रा भक्तिनम्रा भवानी
करयुगसरसिजेनालिलिंगातिगाढम् ।। ६०

इति श्रीभृंगिरिटिसंहितायां शक्त्युत्कर्षप्रकरणे शिवगौरीसंवादे श्रीशिवकामसुन्दरीसहस्रनामस्तोत्रोत्तरपीठिका संपूर्णा ।।

।। शिवमस्तु ।।

# ।। श्रीशिवकामसुन्दरीसहस्रनामावलिः ।।

अगण्यायै नमः । अगम्यमहिमायै नमः । असुरप्रेतासन-स्थितायै नमः । अजरायै नमः । अमृत्युजननायै नमः । अकालान्तकभीकरायै नमः । अजायै नमः । अजांश-समुद्भूतायै नमः । अमरालीवृतगोपुरायै नमः । अत्युग्राजि-नटच्छत्रुकबन्धानेककोटिकायै नमः । अद्रिदुर्गायै नमः । अणिमासिद्धिदापितेष्टामरावल्यै नमः । अनन्तायै नमः । अनन्यसुलभप्रियायै नमः । अद्भुतविभूषणायै नमः । अनूरुकरसंकाशायै नमः । अखण्डानन्दस्वरूपिण्यै नमः । अंधीकृतद्विजारातिनेत्रायै नमः । अत्युग्राट्टहासिन्यै नमः । अन्नपूर्णायै नमः । २०

अपरायै नमः । अलक्ष्यायै नमः । अंबिकायै नमः । अघविनाशिन्यै नमः । अपारकरुणापूरनिभरेखांजनाक्षिण्यै नमः । अमृतांभोधिमध्यस्थायै नमः । अणिमासिद्धिमुखा-श्रितायै नमः । अरविन्दाक्षमालालिपात्रशूलधरायै नमः । अनघायै नमः । अश्वमेधमखावाप्तहविः पुंजकृतादरायै नमः । अश्वसेनावृतायै नमः । अनेकपारूढायै नमः । अगजन्मभुवे नमः । आकाशविग्रहायै नमः । आनन्ददात्र्यै नमः । आज्ञाब्जभासुरायै नमः । आचारतत्परस्वान्तपद्मसंस्थायै नमः । आढ्यपूजितायै नमः । आत्मायत्तजगच्चक्रायै नमः । आत्मारामपरायणायै नमः । ४०

आदित्यमण्डलान्तस्थायै नमः । आदिमध्यान्तवर्जितायै नमः । आद्यन्तरहितायै नमः । ओं आचार्यायै नमः । आदिक्षान्तार्णरूपिण्यै नमः । आद्यायै नमः । अमात्यनुतायै

नमः । आज्यहोमप्रीतायै नमः । आवृतांगनायै नमः । आधारकमलारूढायै नमः । आधाराधेयविवर्जितायै नमः । आधिहीनायै नमः । आसुरी-दुर्गायै नमः । आजिसंक्षोभिता-सुरायै नमः । आधोरणाज्ञाशुण्डाग्राकृष्टासुरगजावृतायै नमः। आश्चर्यविग्रहायै नमः । आचार्यसेवितायै नमः । आगम-संस्तुतायै नमः । आश्रिताखिलदेवादिबृन्दरक्षणतत्परायै नमः । इच्छाज्ञानक्रियाशक्तिरूपायै नमः । ६०

इरावतिसंस्तुतायै नमः । इन्द्राणीरचितश्वेतच्छत्रायै नमः । इडाभक्षणप्रियायै नमः । इन्द्राक्ष्यै नमः । इन्द्रार्चितायै नमः । इन्द्राण्यै नमः । इन्दिरापतिसोदर्यै नमः । इन्दिरायै नमः। इन्दीवरश्यामायै नमः । इरम्मदसमप्रभायै नमः । इभकुम्भाभवक्षोजद्वयायै नमः । इक्षुधनुर्धरायै नमः । इभदन्तोरुनयनायै नमः । इन्द्रगोपसमाकृत्यै नमः । इभशुण्डोरुयुगलायै नमः । इन्दुमण्डलमध्यगायै नमः । इष्टार्तिघ्न्यै नमः । इष्टवरदायै नमः । इभवक्त्रप्रियंकर्यै नमः । ईशित्वसिद्धिसंप्रार्थितापसायै नमः । ८०

ईषत्स्मिताननायै नमः । ईश्वर्यै नमः । ईशप्रियायै नमः । ईशताण्डवालोकनोत्सुकायै नमः । ईक्षणोत्पन्नभुवनकदम्बायै नमः । ईड्यवैभवायै नमः । उच्चनीचादिरहितायै नमः । उरुकान्तारवासिन्यै नमः । उत्साहरहितेन्द्रारये नमः । उरुसन्तोषितामरायै नमः । उदासीनायै नमः । उडुराड्वक्त्रायै नमः । उग्रकृत्यविदूषिण्यै नमः । उपाधिरहितायै नमः । उपादानकारणायै नमः । उन्मत्तनर्तक्यै नमः । उरुस्यन्दनसंबद्धकोट्यश्वायै नमः । उरुपराक्रमायै नमः । उल्कामुख्यै नमः । उमादेव्यै नमः । १००

उन्मत्तक्रोधभैरव्यै नमः । ऊर्जिताज्ञायै नमः । ऊढभुवन-कदम्बायै नमः । ऊर्ध्वमुखावल्यै नमः । ऊर्ध्वप्रसारि-तांघ्रीशदर्शनोद्विग्नमानसायै नमः । ऊहापोहविहीनायै नमः । ऊरुजितरंभामनोहरायै नमः । ऋग्वेदसंस्तुतायै नमः । ऋद्धिदायिन्यै नमः । ऋणमोचिन्यै नमः । ऋजुमार्गपरप्रीतायै नमः । ऋषभध्वजभासुरायै नमः । ऋद्धिकाममुनिव्रात-सत्रयागसमर्चितायै नमः । ॠकारवाच्यायै नमः । ॠक्षादिवृतायै नमः । ॠकारनासिकायै नमः । ऌकारिण्यै नमः । ऌकारोष्ठायै नमः । ॡवर्णाधरपल्लवायै नमः । एकाकिन्यै नमः । १२०

एकमन्त्राक्षरायै नमः । एधितोत्साह-वल्लभायै नमः । ऐश्वर्यदात्र्यै नमः । ओंकारवादिवागीश सिद्धिदायै नमः । ओजः पुंजघनीसान्द्ररूपिण्यै नमः । ओंकारमध्यगायै नमः । ओषधीशमनुप्रीतायै नमः । औदार्यगुणवारिध्यै नमः । औपम्यरहितायै नमः । अंबुजासनसुन्दर्यै नमः । अम्बराधीश नटनसाक्षिण्यै नमः । अःपददायिन्यै नमः । कबरीबन्ध-मुखरीभ्रमरीभ्रमरालकायै नमः । करवाललताधाराभीषणायै नमः । कौमुदीनिभायै नमः । कर्पूराम्बायै नमः । कालरात्र्यै नमः । काल्यै नमः । कलिविनाशिन्यै नमः । कादिविद्यामय्यै नमः । १४०

काम्यायै नमः । काञ्चनाभायै नमः । कलावत्यै नमः । कामेश्वर्यै नमः । कामराजमनुप्रीतायै नमः । कृपावत्यै नमः । कार्तवीर्यद्विसाहस्रदोर्दण्डपटहध्वन्यै नमः । किटिवक्त्राधि-कारोद्यद्रणप्रोत्साहितांगनायै नमः । कीर्तिप्रदायै नमः । कीर्तिमत्यै नमः । कुमार्यै नमः । कुलसुन्दर्यै नमः ।

कुन्तायुधधरायै नमः । कुब्जिकाम्बायै नमः । कुध्रविहारिण्यै नमः । कुलागमरहस्यज्ञवांछादानपरायणायै नमः । कूटस्थितिजुष्यै नमः । कूर्मपृष्ठजित्प्रपदान्वितायै नमः । केकाशब्दतिरस्कारिबाणासनमणीरवायै नमः । केशाकेशिचणायै नमः । १६०

केशिराक्षसाधिपमर्दिन्यै नमः । कैतकछदसंध्याभपिशंगितकचाम्बुदायै नमः । कैलासोत्तुङ्गशृंगाग्रविलासेशपराजितायै नमः । कैशिक्यारभटीरीतिस्तुतरक्तेश्वरीप्रियायै नमः । कोकाहितकरस्फर्धिनखायै नमः । कोकिलवादिन्यै नमः । कोपहुंकारसंत्रस्तससेनासुरनायकायै नमः । कोलाहलरवोद्रेकरिंखज्ज्म्बुकमडंलायै नमः । कौण्डिन्यान्वयसंभूतायै नमः । करिचर्मांबरप्रियायै नमः । कौपीनशिष्टविप्रर्षिस्तुतायै नमः । कौलिकदेशिकायै नमः । कौसुम्भास्तरणायै नमः । कौलमार्गनिष्ठान्तरास्थितायै नमः । कङ्कणाहिगणक्षेमवचनोद्विग्नताक्ष्र्यकायै नमः । कंजाक्ष्यै नमः । कंजविनुतायै नमः । कंजजातिप्रियंकर्यै नमः । खड्गखेटकदोर्दण्डायै नमः । खट्वांग्यै नमः । १८०

खड्गसिद्धिदायै नमः । खण्डितासुरगर्वाद्रये नमः । खलादृष्टस्वरूपिण्यै नमः । खण्डेन्दुमौलिहृदयायै नमः । खण्डितार्केन्दुमण्डलायै नमः । खरांशुतापशमन्यै नमः । खस्थायै नमः । खेचरसंस्तुतायै नमः । खेचर्यै नमः । खेचरीमुद्रायै नमः । खेचराधीशवाहनायै नमः । खेलापारवतरतिप्रीतायै नमः । खाद्यायितान्तकायै नमः । गगनायै नमः । गगनान्तस्थायैं नमः । गगनाकारमध्यमायै नमः । गजारूढायै नमः । गजमुख्यै नमः । गाथागीतामरांगनायै नमः । गदाधर्यै नमः । २००

गदाघातमूर्छितानेकपासुरायै नमः । गरिमालघिमासिद्धिवृतायै नमः । ग्रामादिपालिन्यै नमः । गर्वितायै नमः । गंधवसनायै नमः। गंधवाहसमर्चितायै नमः । गर्वितासुरदाराश्रुपंकिताजिवसुंधरायै नमः । गायत्र्यै नमः । गानसंतुष्टायै नमः । गंधर्वाधिपतीडितायै नमः । गिरिदुर्गायै नमः । गिरीशानसुतायै नमः । गिरिवराश्रयायै नमः । गिरीन्द्रक्रूरकठिनकर्षद्धलवरायुधायै नमः । गीतचारित्रहरितशुकैकगतमानसायै नमः । गीतिशास्त्रगुरवे नमः । गीतिहृदयायै नमः । गिरे नमः । गिरीश्वर्यै नमः । गीर्वाणदनुजाचार्यपूजितायै नमः । २२०

गृध्रवाहनायै नमः । गुडपायससन्तुष्टहृदे नमः । गुप्ततरयोगिन्यै नमः । गुणातीतायै नमः । गुरवे नमः । गौर्यै नमः । गोप्त्र्यै नमः । गोविन्दसोदर्यै नमः । गुरुमूर्तये नमः । गुणाम्भोधये नमः । गुणागुणविवर्जितायै नमः । गुहेष्टदायै नमः । गुहावासियोगिचिन्तितरूपिण्यै नमः । गुह्यागमरहस्यज्ञायै नमः । गुह्यकानन्ददायिन्यै नमः । गुह्यायै नमः । गुह्यार्चितायै नमः । गुह्यस्थानबिन्दुस्वरूपिण्यै नमः । गोदावरीनदीतीरवासिन्यै नमः । गुणवर्जितायै नमः । २४०

गोमेदकमणीकर्णकुण्डलायै नमः । गोपपालिन्यै नमः गोसवासक्तहृदयायै नमः । ओं गोशृङ्गध्यानमोदिन्यै नमः । गङ्गागर्वंकषोद्युक्तरुद्रप्रोत्साहवादिन्यै नमः । गन्धर्ववनितामालामोदिन्यै नमः । गर्वनाशिन्यै नमः । गुञ्जामणिगणप्रोतमालाभासुरकन्धरायै नमः । घटवाद्यप्रियायै नमः । घोरकोणपघ्न्यै नमः । घटार्गलायै नमः । घटिकायै नमः । घटिकामुख्यषट्पारायणमोदिन्यै नमः । घण्टाकर्णादि-

विनुतायै नमः । घनज्योतिर्लतानिभायै नमः । घनश्यामायै नमः । घटोद्भूततापसात्मार्थदेवतायै नमः । घनसारानुलिप्तांग्यै नमः । घोणोद्धृतवसुन्धरायै नमः । घनस्फटिकसंक्लृप्तसालान्तरकदम्बकायै नमः । २६०

घनाल्युद्धेदशिखरगोपुरानेकमन्दिरायै नमः । घूर्णिताक्ष्यै नमः । घृणासिन्धवे नमः । घृणिविद्यायै नमः । घटेश्वर्यै नमः । घृतकाठिन्यहृदे नमः । घण्टामणिमालाप्रसाधनायै नमः । घोरकृत्यायै नमः । घोरवाद्यायै नमः । घोराघौघविनाशिन्यै नमः । घोरायै नमः । घनकृपायुक्तायै नमः । घननीलांबरान्वितायै नमः । घोरास्यायै नमः । घोरशूलाग्रप्रोतासुरकलेबरायै नमः । घोरत्रस्तान्तकभटायै नमः । घोरसंघोषकृद्धलायै नमः । ङान्तार्णाद्यमनुप्रीतायै नमः । ङाकारायै नमः । ङींपरायणायै नमः । २८०

ङीकारिमंजुमंजीरचरणायै नमः । ङांकितांगुल्यै नमः । चक्रवर्तिसमाराध्यायै नमः । चक्रनेमि-रवोत्सुकायै नमः । चण्डमार्ताण्डधिक्कारिप्रभायै नमः। चक्राधिनायिकायै नमः । चण्डालास्यपरामोदायै नमः । चण्डवादपटीयस्यै नमः । चण्डिकायै नमः । चण्डकोदण्डायै नमः । चण्डघ्न्यै नमः । चण्डभैरव्यै नमः । चतुरायै नमः । चतुराम्नायशिरोलक्षितरूपिण्यै नमः । चतुरंगबलोपेतायै नमः। चराचरविनोदिन्यै नमः । चतुर्वक्त्रायै नमः । चक्र-हस्तायै नमः। चक्रपाणिसमर्चितायै नमः । चतुष्षष्टिकलारूपायै नमः। ३००

चतुष्षष्ट्यर्चनोत्सुकायै नमः । चन्द्रमण्डलमध्यस्थायै नमः । चतुर्वर्गफलप्रदायै नमः । चमरीमृगयोद्युक्तायै नमः ।

चिरंजीवित्वदायिन्यै नमः । चम्पकाशोकस्रग्बद्धचिकुरायै नमः । चरुभक्षिण्यै नमः । चराचरजगद्धात्र्यै नमः चन्द्रिकाधवलस्मितायै नमः । चर्माम्बरधरायै नमः । चण्डक्रोधहुंकारभीकरायै नमः । चाटुवादप्रियायै नमः । चामीकरपर्वतवासिन्यै नमः । चापिन्यै नमः । चापमुक्तेषुच्छन्नदिग्भ्रान्तपन्नगायै नमः । चित्रभानुमुख्यै नमः । चित्रसेनायै नमः । चित्रांगदेष्टदायै नमः । चित्रलेखायै नमः । चिदाकाशमध्यगायै नमः । ३२०

चिन्तितार्थदायै नमः । चिन्त्यायै नमः । चिरन्तन्यै नमः । चित्रायै नमः । चित्राम्बायै नमः । चित्तवासिन्यै नमः । चैतन्यरूपायै नमः । चिच्छक्त्यै नमः । चिदम्बरविहारिण्यै नमः । चोरघ्न्यै नमः । चौर्यविमुख्यै नमः । चतुर्दशमनुप्रियायै नमः । छत्रचामरभृल्लक्ष्मीवागिन्द्राणीरतीवृतायै नमः । छन्दश्शास्त्रमय्यै नमः । छन्दोलक्ष्यायै नमः । छेदविवर्जितायै नमः । छन्दोरूपायै नमः । छन्दगत्यै नमः । छन्दःशिरविहारिण्यै नमः । छद्महृते नमः । ३४०

छविसंदीप्तसूर्यचन्द्राग्नितारकायै नमः । छर्दिताण्डावल्यै नमः । छादिताकारायै नमः । छिन्नसंशयायै नमः । छायापतिसमाराध्यायै नमः । छायाम्बायै नमः । छत्रसेवितायै नमः । छिन्नमस्ताम्बिकायै नमः । छिन्नशीर्षशत्रवे नमः । छलान्तक्यै नमः । छेदितासुरजिह्वाग्रायै नमः । छत्रीकृतयशस्विन्यै नमः । जगन्मात्रे नमः । जगत्साक्षिण्यै नमः । जगद्योनये नमः । जगद्गुरवे नमः । जगन्मायायै नमः । जगद्बृन्दवन्दितायै नमः । जयिन्यै नमः । जयायै नमः । ३६०

जनजाड्यप्रतापघ्न्यै नमः । जितासुरमहाव्रजायै नमः । जनन्यै नमः । जगदानन्ददात्र्यै नमः । जह्नुसमर्चितायै नमः । जपमालावराभीतिमुद्रापुस्तकधारिण्यै नमः । जपयज्ञ-पराधीनहृदयायै नमः । जगदीश्वर्यै नमः । जपाकुसुमसंकाशायै नमः । जन्मादिध्वंसकारणायै नमः । जालंध्र पूर्णकामोड्याण-चतुष्पीठरूपिण्यै नमः । जीवनार्थिद्विज व्रातत्राणना-बद्धकंकणायै नमः । जीवब्रह्मैकताकांक्षिजनताकीर्णपार्श्वभुवे नमः । जंभिन्ये नमः । जंभभित्पूज्यायै नमः । जाग्रदादि-त्रयातिगायै नमः । ज्वलदग्निधरायै नमः । ज्वालाप्रोच्चकेश्यै नमः । ज्वरार्तिहृदे नमः । ज्वालामालिनिकायै नमः । ३८०

ज्वालामुख्यै नमः । जैमिनिसंस्तुतायै नमः । झलंझलकृतस्वर्णमंजीरायै नमः । झषलोचनायै नमः । झषकुण्डलिन्यै नमः । झल्लरीवाद्यमुदिताननायै नमः । झषकेतुसमाराध्यायै नमः । झषमांसान्नभक्षिण्यै नमः । झषोपद्रवकृद्धन्त्र्यै नमः । झ्म्रूं मन्त्राधिदेवतायै नमः । झंझानिलातिगमनायै नमः । झषराण्णीतसागरायै नमः । ज्ञानमुद्राधरायै नमः । ज्ञानिहृत्पद्मकुहरास्थितायै नमः । ज्ञानमूर्तये नमः । ज्ञानगम्यायै नमः । ज्ञानदायै नमः । ज्ञातिवर्जितायै नमः । ज्ञेयायै नमः । ज्ञेयादिरहितायै नमः । ४००

ज्ञात्र्यै नमः । ज्ञानस्वरूपिण्यै नमः । टंकपुष्पालि-स्रङ्मंजुकंधरायै नमः । टंकिताचलायै नमः । टंकवेत्रादि-कानेकशस्त्रभृद्दोर्लताबल्यै नमः । ठकारनिभवक्षोज-द्वयाधोवृत्तभासुरायै नमः । ठकारांकितजान्वग्रजित-कोरकितांबुजायै नमः । डाकिन्यै नमः । डामरीतन्त्ररूपायै

नमः । डाडिमपाटलायै नमः । डंबघ्न्यै नमः । डंबराडम्बरोन्मुख्यै नमः । डमरुप्रियायै नमः । डिंबदानचणायै नमः। डोलामुदितायै नमः । डुंडिपूजितायै नमः । ढक्कानिनदसन्तुष्टशिखिनृत्तसमुत्सुकायै नमः । णकारपंजरशुक्यै नमः । णकारोद्यानकोकिलायै नमः । तत्वातीतायै नमः । ४२०

तपोलक्ष्म्यायै नमः । तप्तकांचनसन्निभायै नमः । तन्त्र्यै नमः । तत्त्वमसीवाक्यविषयायै नमः । तरुणीवृतायै नमः । तर्जन्यंगुष्ठसंयोगज्ञानब्रह्ममुनीश्वरायै नमः । तर्जितानेकदनुजायै नमः । तक्षक्यै नमः । तडितालिभायै नमः । ताम्रचूडध्वजोत्संगायै नमः । तापत्रयविवर्जितायै नमः । ताराम्बायै नमः । तारक्यै नमः । तारापूज्यायै नमः । ताण्डवलोलुपायै नमः । तिलोत्तमादिदेवस्त्रीशारीरोत्सुकमानसायै नमः । तिल्वद्रुसंकुलाभोगकान्तारान्तरवासिन्यै नमः । त्रयीद्विड् रसनारक्तपानलोलासिधारिण्यै नमः । त्रयीमय्यै नमः । त्रयीवेद्यायै नमः । ४४०

त्र्यय्यन्तोद्गीतवैभवायै नमः । त्रिकोणस्थायै नमः । त्रिकालज्ञायै नमः । त्रिकूटायै नमः । त्रिपुरेश्वर्य्यै नमः । त्रिचत्वारिंशदश्रांकचक्रान्तर्बिन्दुसंस्थितायै नमः । त्रितारायै नमः । तुंबुरूद्गीतायै नमः । ताक्ष्याकारायै नमः । त्रिताग्निजायै नमः । त्रिपुरायै नमः । त्रिपुरध्वंसिप्रियायै नमः । त्रिपुरसुन्दर्यै नमः । त्रिस्थायै नमः । त्रिमूर्तिसहजशक्त्यै नमः । त्रिपुरभैरव्यै नमः । थांथींकरमृदङ्गादिभृद्विष्णुमुखसेवितायै नमः । थां थीं तक् तक थिंतो कृत्तालध्वनिसभागणायै नमः । दक्षायै नमः । दाक्षायण्यै नमः । ४६०

दक्षप्रजापतिमखान्तक्यै नमः। दक्षिणाचाररसिकायै नमः । दयासंपूर्णमानसायै नमः। दारिद्र्योन्मूलिन्यै नमः । दानशीलायै नमः । दोषविवर्जितायै नमः । दारुकान्तकर्यै नमः । दारुकारण्यमुनिमोहिन्यै नमः । दीर्घदंष्ट्राननायै नमः । दीर्घरसनागीर्णदानवायै नमः । दीक्षितायै नमः । दीक्षिताराध्यायै नमः । दीनसंरक्षणोद्यतायै नमः । दुःखाब्धिबडवायै नमः । दुर्गायै नमः । दुंबीजायै नमः । दुरितापहायै नमः । दुष्टदूरायै नमः । दुराचारशमन्यै नमः । द्यूतवेदिन्यै नमः । ४८०

द्विजावगुरणस्वान्तपिशितामोदिताण्डजायै नमः । धनदायै नमः । धनदाराध्यायै नमः । धनदासकुटुम्बिन्यै नमः । धराधरात्मजायै नमः । धर्मरूपायै नमः । धरणिधूर्धरायै नमः । धात्र्यै नमः । धातृशिरश्छेत्र्यै नमः । धीध्येयायै नमः । ध्रुवपूजितायै नमः । धूमावत्यै नमः । धूम्रनेत्रगर्वसंहारिण्यै नमः । धृत्यै नमः । नखोत्पन्नदशाकारमाधवायै नमः । नकुलीश्वर्यै नमः । नरनारायणस्तुत्यायै नमः । नलिनायत-लोचनायै नमः । नरास्थिस्रग्धरायै नमः । नार्यै नमः । ५००

नरप्रेतोपरिस्थितायै नमः। नवाक्षर्यै नमः । नाममन्त्रजपप्रीतायै नमः । नटेश्वर्यै नमः । नादचामुण्डिकायै नमः । नानारूपकृते नमः । नास्तिकान्तक्यै नमः । नादब्रह्ममय्यै नमः । नामरूपहीनायै नमः । नताननायै नमः । नारायण्यै नमः । नन्दिविद्यायै नमः । नारदोद्गीतवैभवायै नमः। निगमागमसंवेद्यायै नमः । नेत्र्यै नमः । नीतिविशारदायै नमः । निर्गुणायै नमः । नित्यसंतुष्टायै नमः । नित्याषोडशिकावृतायै नमः । नृसिंहदर्पशमन्यै नमः । ५२०

नरेन्द्रगणवन्दितायै नमः । नौकारूढासमुत्तीर्णभवांभोधिनिजाश्रितायै नमः । परमायै नमः । परमज्योतिषे नमः । परब्रह्ममय्यै नमः । परपरापरमय्यै नमः । पाशबाणांकुशधनुर्धरायै नमः । पराप्रासादमन्त्रार्थायै नमः । पतञ्जलिसमर्चितायै नमः । पापघ्न्यै नमः । पाशरहितायै नमः । पार्वत्यै नमः । परमेश्वर्यै नमः । पुण्यायै नमः । पुलिन्दिनीपूज्यायै नमः । प्राज्ञायै नमः । प्रज्ञानरूपिण्यै नमः । पुरातनायै नमः । पराशक्त्यै नमः । ५४०

पंचवर्णस्वरूपिण्यै नमः । प्रत्यंगिरसे नमः । पानपात्रधरायै नमः । पीनोन्नतस्तन्यै नमः । फडर्णध्वस्तपापौघदासायै नमः । फणिवरेडितायै नमः । फणिरत्नासनासीनकामेशोत्सङ्गवासिन्यै नमः । फलदायै नमः। फल्गुनप्रीतायै नमः । फुल्लाननसरोरुहायै नमः । फुल्लोत्तमांगसाहस्रदलपङ्कजभासुरायै नमः । बन्धूकसुमनोरागायै नमः । बादरायणदेशिकायै नमः । बालाम्बायै नमः । बाणकुसुमायै नमः । बगलामुखिरूपिण्यै नमः । बिन्दुचक्रस्थितायै नमः । बिन्दुतर्पणप्रीतमानसायै नमः । बृहत्सामस्तुतायै नमः । ब्रह्ममायायै नमः । ५६०

ब्रह्मर्षिपूजितायै नमः । बृहदैश्वर्यदायै नमः । बंधहीनायै नमः । बुधसमर्चितायै नमः । ब्रह्मचामुण्डिकायै नमः । ब्रह्मजनन्यै नमः । ब्राह्मणप्रियायै नमः । ब्रह्मज्ञानप्रदायै नमः । ब्रह्मविद्यायै नमः । ब्रह्माण्डनायिकायै नमः । ब्रह्मतालप्रियायै नमः । ब्रह्मपञ्चमञ्चकशायिन्यै नमः । ब्रह्मादिविनुतायै नमः । ब्रह्मपत्न्यै नमः । ब्रह्मपुरस्थितायै नमः । ब्राह्मीमाहेश्वरी-

मुख्यशक्तिबृन्दसमावृतायै नमः । भगाराध्यायै नमः । भगवत्यै नमः । भार्गव्यै नमः । भार्गवार्चितायै नमः । ५८०

भण्डासुरशिरश्छेत्र्यै नमः । भाषासर्वस्वदर्शिन्यै नमः । भद्रायै नमः । भद्रार्चितायै नमः । भद्रकाल्यै नमः । भर्गस्वरूपिण्यै नमः । भवान्यै नमः । भाग्यदायै नमः । भीमायै नमः । भामत्यै नमः । भीमसैनिकायै नमः । भुजङ्गनटनोद्युक्तायै नमः । भुजनिर्जितदानवायै नमः । भ्रुकुटीक्रूरवदनायै नमः । भ्रूमध्यनिलयस्थितायै नमः । भेतालनटनप्रीतायै नमः । भोगिराजांगुलीयकायै नमः । भेरुण्डायै नमः । भेदनिर्मुक्तायै नमः । भैरव्यै नमः । ६००

भैरवार्चितायै नमः । मणिमण्डपमध्यस्थायै नमः । माणिक्याभरणान्वितायै नमः । मनोन्मन्यै नमः । मनोगम्यायै नमः । महादेवपतिव्रतायै नमः । मन्त्ररूपायै नमः । महाराज्ञ्यै नमः । महासिद्धालिसंवृतायै नमः । मन्दराद्रिकृतावासायै नमः । महादेव्यै नमः । महेश्वर्यै नमः । महाब्धिमेखलायै नमः । मार्गदुर्गायै नमः । मांगल्यदायिन्यै नमः । महाव्रतक्रतुप्रीतायै नमः । माणिभद्रसमर्चितायै नमः । महिषासुरशिरच्छेदनर्तक्यै नमः । मुण्डखण्डिन्यै नमः । मात्रे नमः । ६२०

मरकतश्यामायै नमः । मातङ्ग्यै नमः । मतिसाक्षिण्यै नमः । माधव्यै नमः । माधवाराध्यायै नमः । मधुमांसप्रियायै नमः । महत्यै नमः । मार्यै नमः । मारान्तकक्षोभकारिण्यै नमः । मीनलोचनायै नमः । मालतीकुन्दमालाढ्यायै नमः । माषौदनसमुत्सुकायै नमः । मिथुनासक्तहृदयायै नमः ।

मोहिताशेषविष्टपायै नमः । मुद्रायै नमः । मुद्राप्रियायै नमः । मूर्खनाशिन्यै नमः । मेषभक्षिण्यै नमः । मूकाम्बायै नमः । मुखजामोदजनकालोकनप्रियायै नमः । ६४०

मौनव्याख्यापरायै नमः । मौनसत्यचिन्मात्रलक्षणायै नमः । मौंजीकच्छधरायै नमः । मौर्वीद्विरेफमुखरोन्मुखायै नमः । यज्ञबृन्दप्रियायै नमः । यष्ट्र्यै नमः । यान्तवर्ण-स्वरूपिण्यै नमः । यन्त्ररूपायै नमः । यशोदात्मजात-सन्नुतवैभवायै नमः । यशस्कर्यै नमः । यमाराध्यायै नमः । यजमानाकृतये नमः । यतये नमः । याकिनीयक्षरक्षादिवृतायै नमः । यजनतर्पणायै नमः । याथार्थ्यविग्रहायै नमः । योग्यायै नमः । योगिन्यै नमः । योगनायिकायै नमः । यामिन्यै नमः । ६६०

यजनोत्साहायै नमः । यामिनीचरभक्षिण्यै नमः । यायजूकार्चितपदायै नमः । यज्ञेश्यै नमः । यक्षिणीश्वर्यै नमः । यासापद्मधरायै नमः । यासान्तरपरिष्कृतायै नमः । योषाऽभयंकर्यै नमः । योषिद् बृन्दसमर्चितायै नमः । रक्तचामुण्डिकायै नमः । रात्रिदेवतायै नमः । रागलोलुपायै नमः । रक्तबीजप्रशमन्यै नमः । रजोगंधनिवारिण्यै नमः । रणरंगनट्यै नमः । रक्तमंजीरचरणांबुजायै नमः । रयध्वस्ताचलायै नमः । रागहीनमानसहंसिन्यै नमः । रसनालेपितक्रूररक्तबीजकलेबरायै नमः । रक्षाकर्यै नमः । ६८०

रमायै नमः । रम्यायै नमः । रञ्जिन्यै नमः । रसिकावृतायै नमः । राकिण्यम्बायै नमः । रामनुतायै नमः ।

रमावाणीनिषेवितायै नमः । रागालापपरब्रह्मशिरोमाला-प्रसाधनायै नमः । राजराजेश्वर्यै नमः । राज्ञ्यै नमः । राजीवनयनप्रियायै नमः । राजव्रातकिरीटांशुनीराजित-पदांबुजायै नमः । रुद्रचामुण्डिकायै नमः । रुक्मसदृशायै नमः। रुधिरप्रियायै नमः । रुद्रताण्डवसामर्थ्यदर्शनोत्सुकमानसायै नमः । रुद्राट्टहाससंक्षुभ्यज्जगत्सृष्टिविधायिन्यै नमः । रुद्राण्यै नमः । रुद्रवनितायै नमः । रुरुराजहितैषिण्यै नमः । ७००

रेणुकायै नमः । रेणुकासूनुस्तुत्यायै नमः । रेवा-विहारिण्यै नमः । रोगघ्न्यै नमः । रोषनिर्दग्धशत्रुसेना-निवेशिन्यै नमः । रोहिणीशांशुसं भूतझरीरत्नवितानिकायै नमः । रौद्र्यै नमः । रौद्रास्त्रनिर्दग्धराक्षसायै नमः । राहुपूजितायै नमः । लघूक्तिवल्गुस्तिमितवाणीत्यक्त-विपश्चिकायै नमः । लज्जावत्यै नमः । ललत्प्रोच्चकेशायै नमः । लम्बिपयोधरायै नमः । लयादिकर्त्र्यै नमः । लोमालिलता-नाभीसरःकट्यै नमः । ललदोष्ठदलद्वन्द्ववदनायै नमः । लक्ष्यदूरगायै नमः । ललन्तिकामणीभास्वन्भिटिल-श्रीमुखांम्बुजायै नमः । ललाटार्धनिशानाथकलंकोद्भासि-लोचनायै नमः । ललितायै नमः । ७२०

लोभिन्यै नमः । लोभहीनायै नमः । लोकेश्वर्यै नमः । लघवे नमः । लक्ष्म्यै नमः । लक्ष्मीशसहजायै नमः । लक्ष्मणाग्रजवन्दितायै नमः । लाकिन्यै नमः । लंघिताम्भोधिनिवहायै नमः । ललिताम्बिकायै नमः । लाजहोमप्रियायै नमः । लम्बमुक्ताभासुरनासि-कायै नमः । लाभालाभादिरहितायै नमः । लास्यदर्शनकोविदायै नमः ।

लावण्यदर्शनोद्विग्नरतीशायै नमः । लघुभाषिण्यै नमः । लाक्षारसाञ्चितपदायै नमः । लघुश्यामायै नमः । लतातनवे नमः । लाक्षालक्ष्मीतिरस्कारियुगलाधरपल्लवायै नमः । ७४०

लीलागतिपराभूत हंसायै नमः । लीलाविनोदिन्यै नमः । लीलानन्दनकल्पद्रुलताडोलाविहारिण्यै नमः । लीला-पीताब्धिविनुतायै नमः । लीलास्वीकृतविग्रहायै नमः । लीलाशुकोक्तिमुदितायै नमः । लीलामृगविहारिण्यै नमः । लोकमात्रे नमः । लोकसृष्टिस्थितिसंहारकारिण्यै नमः । लोकातीतपदायै नमः । लोकवंद्यायै नमः । लोकैकसाक्षिण्यै नमः । लोकातीताकृतये नमः । लब्धमार्गत्यागपरान्तकायै नमः । लोकानुल्लंघित-निजशासनायै नमः । लब्धविग्रहायै नमः । लोमावलिलता-लंबिस्तनयुग्मनताननायै नमः । लोलचित्तविदूरस्थायै नमः । लोमलंम्ब्यंडजालकायै नमः । लंबितारिशिरोहस्तायै नमः । ७६०

लोकरक्षापरायणायै नमः । वनदुर्गायै नमः । विन्ध्य-शैलवासिन्यै नमः । वामकेश्वर्यै नमः । वशिन्यादिस्तुतायै नमः । वह्निज्वालोद्गारिमुख्यै नमः । वरायै नमः । वक्षोजयुग्म-विरहासहिष्णुकरशंकरायै नमः । वाङ्मनोतीतविषयायै नमः । वामाचारसमुत्सुकायै नमः । वाजपेयाध्वरानन्दायै नमः । वासुदेवेष्टदायिन्यै नमः । वादित्रध्वनिसंभ्रान्तदिग्गजालये नमः । विधीडितायै नमः । वामदेववसिष्ठादिपूजितायै नमः । वारिदप्रभायै नमः । वामस्तनाश्लिषद्धस्तपद्मशंभुविहारिण्यै नमः । वाराह्यै नमः । वास्तुमध्यस्थायै नमः । वासवान्तःपुरेष्टदायै नमः ।

वारांगनानीतपूर्णकुंभदीपालिमंडपायै नमः । वारिजासनशीर्षालिमालायै नमः । वार्धिसरोवरायै नमः । वारितासुरदर्पश्रिये नमः । वार्ध(र्त्रे)घ्नीमन्त्ररूपिण्यै नमः । वार्तात्यै नमः । वारुणीविद्यायै नमः । वरुणारोग्यदायिन्यै नमः । विजयायै नमः । विजयास्तुत्यायै नमः । विरूपायै नमः । विश्वरूपिण्यै नमः । विप्रशात्रुकुटुंबघ्न्यै नमः । विप्रपूज्यायै नमः । विषापहायै नमः । विरिंचिशिक्षणोद्युक्त-मधुकैटभनाशिन्यै नमः । विश्वमात्रे नमः । विशालाक्ष्यै नमः । विरागायै नमः । वीशवाहनायै नमः । ८००

वीतरागवृतायै नमः । व्याघ्रपादनृत्तप्रदर्शिन्यै नमः । वीरभद्रहतोन्मत्तदक्षयज्ञाश्रितामरायै नमः । वेदवेद्यायै नमः । वेदरूपायै नमः । वेदाननसरोरुहायै नमः । वेदान्तविषयायै नमः । वेणुनादज्ञायै नमः । वेदपूजितायै नमः । वौषण्मन्त्रमयाकारायै नमः । व्योमकेश्यै नमः । विभावर्यै नमः । वंद्यायै नमः । वाग्वादिन्यै नमः । वन्यमांसाहारायै नमः । वनेश्वर्यै नमः । वांछाकल्पलतायै नमः । वाण्यै नमः । वाक्प्रदायै नमः । वागधीश्वर्यै नमः । ८२०

शक्तिबृन्दावृतायै नमः । शब्दमय्यै नमः । श्रीचक्ररूपिण्यै नमः । शबर्यै नमः । शबरीदुर्गायै नमः । शरभेशाच्छदाकृतये नमः । शब्दजालोद्भवझंकारवासंदिग्धता-पसायै नमः । शरणागतसंत्राणपरायणपटीयस्यै नमः । शशांकशेखरायै नमः । शस्त्रधरायै नमः । शतमुखांबुजायै नमः । शातोदर्यै नमः । शान्तिमत्यै नमः । शरच्चन्द्र-निभाननायै नमः । शापापनोदनचणायै नमः । शंकादोषादि-

नाशिन्यै नमः । शिवकामसुन्दर्यै नमः । श्रीदायै नमः । शिववामांगवासिन्यै नमः । शिवायै नमः । ८४०

श्रीदाननिपुणलोचनायै नमः । श्रीपतिप्रियायै नमः । शुकादिद्विजबृन्दोक्तिस्तब्धमानसगीष्पत्यै नमः । शुक्रमण्डल संकाशमुक्तामालायै नमः । शुचिस्मितायै नमः । शुक्लदंष्ट्रा ग्रसंदीप्तपातालभ्रान्तपन्नगायै नमः । शुभ्रासनायै नमः । शूरसेनावृतायै नमः । शूलादिनाशिन्यै नमः । शूकवृश्चिक-नागाखुवृकहिंस्रालिसंवृतायै नमः । शूलिन्यै नमः । शूल-खड्गाहिशंखचक्रगदाधरायै नमः । शोकाब्धिशोषणोद्युक्त-बडबायै नमः । श्रोत्रियावृतायै नमः । शंकरालिंगना-नन्दमेदुरायै नमः । शीतलाम्बिकायै नमः । शंकर्यै नमः । शंकरार्धांगहरायै नमः । शाकरवाहनायै नमः । शंभुकोपाग्निनिर्दग्धमदनोत्पादकेक्षणायै नमः । ८६०

शांभव्यै नमः। शंभुहस्ताब्जलीलारुणकरावल्यै नमः । श्रीविद्यायै नमः । शुभदायै नमः । शुभ्रवस्त्रायै नमः । शुंभासुरान्तक्यै नमः । षडाधाराब्जनिलायै नमः । षाड्गुण्य-श्रीप्रदायिन्यै नमः । षडूर्मिघ्न्यै नमः । षडध्वान्तपदा-रूढस्वरूपिण्यै नमः । षट्कोणमध्यनिलयायै नमः । षडर्णायै नमः । षान्तरूपिण्यै नमः । षड्जादिस्वरनिर्मात्र्यै नमः । षडंगयुवतीश्वर्यै नमः । षड्भावरहितायै नमः । षण्डकंटक्यै नमः । षण्मुखप्रियायै नमः । षड्रसास्वादमुदितायै नमः । षष्ठीशादिमदेवतायै नमः । ८८०

षोढान्यासमयाकारायै नमः । षोडशाक्षरदेवतायै नमः । सकलायै नमः । सच्चिदानन्दलक्षणायै नमः । सौख्यदायिन्यै

नमः । सनकादिमुनिध्येयायै नमः । संध्यानाट्यविशारदायै नमः । समस्तलोकजनन्यै नमः । सभानटनरंजिन्यै नमः । सरःपुलिनलीलार्थियुवतीनिवहोत्सुकायै नमः । सरस्वत्यै नमः । सुराराध्यायै नमः । सुरापानप्रियासुरायै नमः । सरोजलविहारोद्यत्प्रियाकृष्टोत्तरांशुकायै नमः । साध्यायै नमः । साध्यादिरहितायै नमः । स्वतन्त्रायै नमः । स्वस्तिरूपिण्यै नमः । साध्व्यै नमः । संगीतरसिकायै नमः । ९००

सर्वदायै नमः । सर्वमङ्गलायै नमः । सामोद्गीत-निजानन्दमहिमालये नमः । सनातनायै नमः । सारस्वतप्रदायै नमः । सामायै नमः । संसारार्णवतारिण्यै नमः । सावित्र्यै नमः । संगनिर्मुक्तायै नमः । सतीश्यै नमः । सर्वतोमुख्यै नमः । सांख्यतत्वज्ञनिवहव्यापिसालायै नमः । सुखेश्वर्यै नमः । सिद्धसंघावृतायै नमः । साध्यवन्दितायै नमः । साधुसत्कृतायै नमः । सिंहासनगतायै नमः । सर्वशृंगाररसवारिधये नमः । सुधाब्धिमध्यनिलयायै नमः । स्वर्णद्वीपान्तरस्थितायै नमः । ९२०

सुधासिक्तालवालोद्यत्कायमानलतागृहायै नमः । सुभगायै नमः । सुन्दर्यै नमः । सुभ्रुवे नमः । समुपास्यत्व-लक्षणायै नमः । सुरद्रुसंकुलाभोगतटायै नमः । सौदामिनी-निभायै नमः । सुरभीकेशसंभ्रान्तद्विरेफमुखरान्वितायै नमः । सूर्यचन्द्रांशुधिक्कारिप्रभारत्नालिमंडपायै नमः । सोमपानो-द्भवामोदविप्रगीतापदानकायै नमः । सोमयागप्रियायै नमः । सोमसूर्यवह्नित्रिलोचनायै नमः । सौगन्धिकमरुद्वेगमोदितायै नमः । सद्विलासिन्यै नमः । सौन्दर्यमोहिताधीनवल्लभायै

नमः। सन्ततिप्रदायै नमः । सौभाग्यमन्त्रिण्यै नमः । सत्यवादायै नमः । सागरमेखलायै नमः । स्वश्वासोद्वाच्छ्वासभुवनमोचनोन्मोचनायै नमः । ९४०

स्वधायै नमः । हयारूढायै नमः । हयग्रीवविनुतायै नमः । हतकिल्बिषायै नमः । हरालिङ्गनशीतांशून्मिषन्नेत्रकुमुद्वत्यै नमः । हरिनाभिसमुद्भूतविरिंचिविनुतायै नमः । हरायै नमः। हादिविद्यायै नमः । हाकिन्यै नमः । हरिचण्डिकायै नमः। हारावलिप्रभादीप्तहरिदन्तदिगम्बरायै नमः । हालाहलविषोद्विग्नविष्टपानेकरक्षक्यै नमः । हाहाकारवोद्गीतदनुजायै नमः । हारमंजुलायै नमः । हिमाद्रितनयायै नमः । हीरमकुटायै नमः । हार पन्नगायै नमः । हुताशनधरायै नमः । होमप्रियायै नमः । ९६०

होत्र्यै नमः । हयेश्वर्यै नमः । हेमपद्मधरायै नमः । हेमवर्मराजसमर्चितायै नमः । हंसिन्यै नमः । हंसमन्त्रार्थायै नमः । हंसवाहायै नमः । हरांगभृते नमः । हृद्यायै नमः । हृद्यमनोनित्यनिवासायै नमः । हरकुटुंबिन्यै नमः । ह्रीमत्यै नमः । हृदयाकाशतरण्यै नमः । ह्रींपरायणायै नमः । क्षणदाचरसंहारचतुरायै नमः । क्षुद्रदुर्मुखायै नमः । क्षणदाच्यायै नमः । क्षपानाथसुधार्द्रकबर्यै नमः । क्षितये नमः । क्षमायै नमः । ९८०

क्षमाधरसुतायै नमः । क्षामक्षोभविनाशिन्यै नमः । क्षिप्रसिद्धिप्रदायै नमः । क्षिप्रगमनायै नमः । क्षुण्णिवारिण्यै नमः । क्षीणपुण्यासुहृते नमः । क्षीरवर्णायै नमः । क्षयविवर्जितायै नमः । क्षीरान्नाहारमुदितायै नमः । क्ष्म्र्यूं

मन्त्राप्तेष्टयोगिराजे नमः । क्षीराब्धितनयायै नमः । क्षीरघृतमध्वासवार्चितायै नमः । क्षुधार्तिदीनसंत्राणायै नमः । क्षितिसंरक्षणक्षमायै नमः । क्षेमंकर्यै नमः । क्षेत्रपालवन्दितायै नमः । क्षेत्ररूपिण्यै नमः । क्षौमाम्बरधरायै नमः । क्षत्रसंप्रार्थितजयोत्सवायै नमः । क्ष्वेलभुग्रसनास्वादजातवाग्रसवैभवायै नमः । १०००

इति श्रीभृंगिरिटिसंहितायां शक्त्युत्कर्षप्रकरणे शिवकामसुन्दरीसहस्रनामावलिः संपूर्णा ॥ शिवंभूयात् ॥

# ।। श्रीशिवकामसुन्दरीसहस्रनामस्तोत्रम्

## ।। पूर्वपीठिका

समाहूय परं कान्तं एकदा विजने मुदा ।
परमानन्दसन्दोहमुदितं प्राह पार्वती ।। १

पार्वती उवाच

श्रीमन्नाथ महानन्दकारणं ब्रूहि शंकर ।
योगीन्द्रोपास्य देवेश प्रेमपूर्ण सुधानिधे ।। २

कृपास्ति मयि चेत् शम्भो सुगोप्यमपि कथ्यताम् ।
शिवकामेश्वरीनामसाहस्रं वद मे प्रभो ।। ३

श्री शङ्कर उवाच

निर्भरानन्दसन्दोहः शक्तिभावेन जायते ।
लावण्यसिन्धुस्तत्रापि सुन्दरी रसकन्धरा ।। ४

तामेवानुक्षणं देवि चिन्तयामि ततः शिवे ।
तस्या नामसहस्राणि कथयामि तव प्रिये ।। ५

सुगोप्यान्यपि रम्भोरु गंभीरस्नेहविभ्रमात् ।
तामेव स्तुवता देवीं ध्यायतोऽनुक्षणं मम ।
सुखसंदोहसंभारभावनानन्दकारणम् ।। ६

अस्य श्रीशिवकामसुन्दरीसहस्रनाम स्तोत्रमहामन्त्रस्य । सदाशिव ऋषिः अनुष्टुप् छन्दः श्रीमच्छिवकामसुन्दरी देवता । वाग्भवस्वरूपं ऐं बीजम् । चिदानन्दात्मकं ह्रीं शक्तिः । कामराजात्मकं क्लीं कीलकम् । श्रीमच्छिवकामसुन्दरीप्रसाद-सिद्ध्यर्थे जपे विनियोगः ।। षोडशार्णमूलेन न्यासः ।। षोडशार्णध्यानमेव अत्रापि ध्यानम् ।

सिद्धसिद्धनवरत्नभूमिके कल्पवृक्षनववाटिसंवृते।
रत्नसालवनसंभृतेऽनिशं तत्र वापिशतकेन संवृते ॥ ७

रत्नवाटिमणिमण्टपेऽरुणे चण्डभानुशतकोटिभासुरे।
आदिशैवमणिमञ्चके परे शंकरांकमणिपीठकोपरि॥
कादिहान्तमनुरूपिणीं शिवां संस्मरेच्च शिवकामसुन्दरीम् ॥८

लमित्यादि पञ्च पूजा॥

शिवकामेश्वरीनामसाहस्रस्तोत्रमुत्तमम्।
प्रोच्यते श्रद्धया देवि शृणुष्वावहिता प्रिये॥ ९

कामेशीनामसाहस्रे सदाशिव ऋषिः स्मृतः।
छन्दोऽनुष्टुप् देवता च शिवकामेश्वरी स्मृता॥ १०

ऐं बीजं कीलकं क्लींच ह्रीं शक्तिः कथिता प्रिये।
न्यासध्यानादिकं सर्वं षोडशार्णवदीरितम्॥ ११

अनेन स्तोत्रराजेन सर्वाभीष्टं लभेत ना।

## सहस्रनामस्तोत्रम्

श्रीशिवा शिवकामी च सुन्दरी भुवनेश्वरी
आनन्दसिन्धुरानन्दानन्दमूर्तिर्विनोदिनी॥ १

त्रैपुरी सुन्दरी प्रेमपाथोनिधिरनुत्तमा।
रामोल्लासा परा भूतिः विभूतिश्शंकरप्रिया॥ २

शृंगारमूर्तिर्विरता रसानुभवरोचना।
परमानन्दलहरी रतिरङ्गवती सती॥ ३

रङ्गमालानङ्गकलाकेलिः कैवल्यदा कला।
रसकल्पा कल्पलता कुतूहलवती गतिः॥ ४

विनोददुग्धा सुस्निग्धा मुग्धमूर्तिर्मनोहरा।
बालार्ककोटिकिरणा चन्द्रकोटिसुशीतला ॥ ५

स्रवत्पीयूषदिग्धांगी संगीत नटिका शिवा।
कुरङ्गनयना कान्ता सुखसन्ततिरिन्दिरा ॥ ६

मङ्गला मधुरापाङ्गा रञ्जनी रमणी रतिः।
राजराजेश्वरी राज्ञी महेन्द्रपरिवन्दिता ॥ ७

प्रपञ्चगतिरीशानी सामरस्यपरायणा।
हंसोल्लासा हंसगतिः शिञ्जत्कनकनूपुरा ॥ ८

मेरुमन्दरवक्षोजा सृणिपाशवरायुधा।
[1]शंखकोदण्डसक्ताब्जपाणिद्वयविराजिता ॥ ९

चन्द्रबिम्बानना चारुमकुटोत्तंसचन्द्रिका।
सिन्दूरतिलका चारुधम्मिल्लामलमालिका ॥ १०

मन्दारदाममुदिता रक्तपुष्पविभूषिता।
सुवर्णाभरणप्रीता मुक्तादाममनोहरा ॥ ११

ताम्बूलपूरवदना मदनानन्दमानसा।
सुखाराध्या तपस्सारा कृपावारिधिरीश्वरी। १२

वक्षःस्थललसन्मग्ना प्रभा मधुरसोन्मुखा।
बिन्दुनादात्मिका चारुरसिता तुर्यरूपिणी ॥ १३

कमनीयाकृतिः धन्या शङ्करप्रीतिमञ्जरी।
कन्या कलावती माता गजेन्द्रगमना शुभा ॥ १४

कुमारी करभोरु श्रीः रूपलक्ष्मीः सुराजिता।
सन्तोषसीमा संपत्तिः शातकुम्भप्रिया द्युतिः ॥ १५

1. शरकोदण्ड

परिपूर्णा जगद्धात्री विधात्री बलवर्धिनी ।
सार्वभौमनृपश्रीश्च साम्राज्यगतिरासिका ।। १६

सरोजाक्षी दीर्घदृष्टिः सौचक्षणविचक्षणा ।
रङ्गस्रवन्ती रसिका प्रधानरसरूपिणी ।। १७

रससिन्धुः सुगात्री च युवतिः मैथुनोन्मुखी ।
निरन्तरा रसासक्ता शक्तिस्त्रिभुवनात्मिका ।। १८

कामाक्षी कामनिष्ठा च कामेशी भगमङ्गला ।
सुभगा भगिनी भोग्या भाग्यदा भगदा भगा ।

भगलिङ्गानन्दकला भगमध्यनिवासिनी ।। १९

भगरूपा भगमयी भगयन्त्रा भगोत्तमा ।
योनिर्जया कामकला कुलामृतपरायणा ।। २०

कुलकुण्डालया सूक्ष्मजीवस्फुलिङ्गरूपिणी ।

मूलस्थिता केलिरता वलयाकृतिरीडिता ।। २१

सुषुम्ना कमलानन्दा चित्रा कूर्मगतिर्गिरिः ।
सितारुणा सिन्धुरूपा प्रवेगा निर्धनी क्षमा ।। २२

घण्टाकोटिरसारावा रविबिंबोत्थिताद्भुता ।
नादान्तलीना संपूर्णा प्रणवा बहुरूपिणी ।। २३

भृङ्गारावा वशगतिः वागीशी मधुरध्वनिः ।
वर्णमाला सिद्धिकला षट्चक्रक्रमवासिनी ।। २४

मणिपूरस्थिता स्निग्धा कूर्मचक्रपरायणा ।
मूलकेलिरता साध्वी स्वाधिष्ठाननिवासिनी ।। २५

अनाहतगतिर्दीपा शिवानन्दमयद्युतिः ।
विरुद्धबन्धा संबुद्धा जीवभोक्त्री स्थलीरता ।। २६

आज्ञाचक्रोज्ज्वलस्फारस्फुरन्ती निर्गतद्विषा।
चन्द्रिका चन्द्रकोटीशी सूर्यकोटिप्रभामयी ॥ २७

पद्मरागारुणच्छाया नित्याह्लादमयी प्रभा।
महाशून्यालया चन्द्रमण्डलामृतनन्दिता ॥ २८

कान्ताङ्गसङ्गमुदिता सुधामाधुर्यसंभृता।
महाचन्द्रस्मितालिप्ता मृत्पात्रस्था सुधाद्युतिः ॥ २९

स्रवत्पीयूषसंसक्ता शश्वत्कुण्डालया भवा।
श्रेयो द्युतिः प्रत्यगर्था सेवा फलवती मही ॥ ३०

शिवा शिवप्रिया शैवा शङ्करी शांभवी विभुः।
स्वयंभूः स्वप्रिया स्वीया स्वकीया जनमातृका ॥ ३१

सुरामा स्वप्रिया श्रेयः स्वाधिकाराधिनायिका।
मण्डला जननी मान्या सर्वमङ्गलसंततिः ॥ ३२

भद्रा भगवती भाव्या कलितार्धेन्दुभासुरा।
कल्याणललिता काम्या कुकर्मकुमतिप्रदा ॥ ३३

कुरङ्गाक्षी क्षीरनेत्रा क्षीरा मधुरसोन्मदा।
वारुणीपानमुदिता मदिरामुदिता स्थिरा ॥ ३४

कादम्बरीपानरुचिः विपाशा पशुभावना।
मुदिता ललितापाङ्गा दरान्दोलितदीर्घदृक् ॥ ३५

दैत्याकुलानलशिखा मनोरथसुधाद्युतिः।
सुवासिनी पीतगात्री पीनश्रोणिपयोधरा ॥ ३६

सुचारुकबरी दध्युदध्युत्थितमौक्तिका।
बिंबाधरद्युतिः मुग्धा प्रवालोत्तमदीधितिः ॥ ३७

तिलप्रसूननासाग्रा हेममौक्तिककोरका।
निष्कलङ्केन्दुवदना बालेन्दुवदनोज्ज्वला ॥ ३८

नृत्यन्त्यञ्जननेत्रान्ता प्रस्फुरत्कर्णशष्कुली ।
भालचन्द्रातपोन्नद्धा मणिसूर्यकिरीटिनी ।। ३९

कचौघचंपकश्रेणी मालिनीदाममण्डिता ।
हेममाणिक्य ताटङ्का मणिकांचन कुण्डला ।। ४०

सुचारुचुबुका कम्बुकण्ठी कुण्डावली रमा ।
गङ्गातरङ्गहारोर्मिः मत्तकोकिलनिस्वना ।। ४१

मृणालविलसद्बाहुपाशांकुशधनुर्धरा ।
केयूरकङ्कणश्रेणी नानामणिमनोरमा ।। ४२

ताम्रपङ्कजपाणिश्रीः नवरत्नप्रभावती ।
अङ्गुलीयमणिश्रेणी कान्तिमङ्गलसन्ततिः ।। ४३

मन्दरद्वन्द्वसुकुचा रोमराजिभुजङ्गिका ।
गंभीरनाभिस्त्रिवलीभङ्गुरा क्षीणमध्यमा ।। ४४

रणत्काञ्चीगुणानद्धा पट्टांशुकनितम्बिका ।
मेरुसन्धिनितम्बाढ्या गजशुण्डोरुयुग्मयुक् ।। ४५

सुजानुर्मदनानन्दमयजंघाद्वयान्विता ।
गूढगुल्फा मञ्जुशिञ्जन्मणिनूपुरमण्डिता ।। ४६

पदद्वन्द्वजिताम्भोजा नखचन्द्रावलीप्रभा ।
सुसीमप्रपदा राजंहसमत्तेभमन्दगा ।। ४७

योगिध्येयपदद्वन्द्वा सौन्दर्यामृतसारिणी ।
लावण्यसिन्धुः सिन्दूरतिलका कुटिलालका ।। ४८

साधुसीमन्तिनी सिद्धबुद्धबृन्दारकोदया ।
बालार्ककिरणश्रेणिशोणश्रीः प्रेमकामधुक् ।। ४९

रसगंभीररसरसी पद्मिनी रससारसा।
प्रसन्नासन्नवरदा शारदा भुवि भाग्यदा ॥ ५०

नटराजप्रिया विश्वानाद्या नर्तकनर्तकी।
चित्रयन्त्रा चित्रतन्त्रा चित्रविद्यावलीगतिः ॥ ५१

चित्रकूटा त्रिकूटा च पञ्चकूटा च पञ्चमी।
चतुष्कूटा शंभुविद्या षट्कूटा विष्णुपूजिता ॥ ५२

कूटषोडशसंपन्ना तुरीया परमा कला।
षोडशी मन्त्रयन्त्राणां ईश्वरी मेरुमण्डला ॥ ५३

षोडशार्णा त्रिवर्णा च बिन्दुनादस्वरूपिणी।
वर्णातीता वर्णमता शब्दब्रह्ममयी सुखा ॥ ५४

सुखज्योत्स्नानन्दविद्युदन्तराकाशदेवता।
चैतन्या विधिकूटात्मा कामेशी स्वप्नदर्शना ॥ ५५

स्वप्नरूपा बोधकरी जाग्रती जागराश्रया।
स्वप्नाश्रया सुषुप्तिस्था तन्त्रमूर्तिश्च माधवी ॥ ५६

लोपामुद्रा कामराज्ञी माधवी मित्ररूपिणी।
शांकरी नन्दिविद्या च भास्वन्मण्डलमध्यगा ॥ ५७

माहेन्द्रस्वर्गसंपत्तिः दूर्वासस्सेविता श्रुतिः।
साधकेन्द्रगतिस्साध्वी सुलिप्ता सिद्धिकन्धरा ॥ ५८

पुरत्रयेशी पुरकृत् षष्ठी च परदेवता।
विघ्नदूरी भूरिगुणा पुष्टिः पूजितकामधुक् ॥ ५९

हेरम्बमाता गणपा गुहाम्बाऽऽर्या नितम्बिनी।
एषा सीमन्तिनी मोक्षदक्षा दीक्षितमातृका ॥ ६०

साधकाम्बा सिद्धमाता साधकेन्द्रमनोरमा।
यौवनोन्मादिनी तुङ्गस्तनी सुश्रोणिमण्डिता ।। ६१

पद्मरक्तोत्पलवती रक्तमाल्यानुलेपना।
रक्तमाल्यरुचिर्दक्षा शिखण्डिन्यतिसुन्दरी ।। ६२

शिखण्डिनृत्यसन्तुष्टा शिखण्डिकुलपालिनी।
वसुन्धरा च सुरभिः कमनीयतनुश्शुभा ।। ६३

नन्दिनी त्रीक्षणवती वसिष्ठालयदेवता।
गोलकेशी च लोकेन्द्रा नृलोकपरिपालिका ।। ६४

हविर्धात्री देवमाता बृन्दारकपरात्मयुक्।
रुद्रमाता रुद्रपत्नी मदोद्वारभरा क्षितिः ।। ६५

दक्षिणा यज्ञसंपत्तिः स्वबला धीरनन्दिता।
क्षीरपूर्णार्णवगतिः सुधायोनिः सुलोचना ।। ६६

रमा तुङ्गा सदासेव्या सुरसंघदया उमा।
सुचरित्रा चित्रवरा सुस्तनी वत्सवत्सला ।। ६७

रजस्वला रजोयुक्ता रञ्जिता रङ्गमालिका।
रक्तप्रिया सुरक्ता च रतिरङ्गस्वरूपिणी ।। ६८

रजश्शुक्लाक्षिका निष्ठा ऋतुस्नाता रतिप्रिया।
भाव्यभाव्या कामकेलिः स्मरभूः स्मरजीविका ।। ६९

समाधिकुसुमानन्दा स्वयम्भुकुसुमप्रिया।
स्वयंभुप्रेमसन्तुष्टा स्वयम्भूनिन्दकान्तका ।। ७०

स्वयम्भुस्था शक्तिपुटा रविः सर्वस्वपेटिका।
अत्यन्तरसिका दूतिः विदग्धा प्रीतिपूजिता ।। ७१

तूलिकायन्त्रनिलया योगपीठनिवासिनी ।
सुलक्षणा दृश्यरूपा सर्व लक्षणलक्षिता ।। ७२

नानालङ्कारसुभगा पञ्चकामशरार्चिता ।
ऊर्ध्वत्रिकोणयन्त्रस्था बाला कामेश्वरी तथा ।। ७३

गुणाध्यक्षा कुलाध्यक्षा लक्ष्मीश्चैव सरस्वती ।
वसन्तमदनोत्तुङ्ग स्तनी कुचभरोन्नता ।। ७४

कलाधरमुखी मूर्धपाथोधिश्च कलावती ।
दक्षपादादिशीर्षान्तषोडशस्वरसंयुता ।। ७५

श्रद्धा पूर्तिः रतिश्चैव भूतिः कान्तिर्मनोरमा ।
विमला योगिनी घोरा मदनोन्मादिनी मदा ।। ७६

मोदिनी दीपिनी चैव शोषिणी च वशङ्करी ।
रजन्यन्ता कामकला लसत्कमलधारिणी ।। ७७

वाममूर्धादिपादान्तषोडशस्वरसंयुता ।
पूषरूपा सुमनसां सेव्या प्रीतिः द्युतिस्तथा ।। ७८

ऋद्धिः सौदामिनी चिच्च हंसमालावृता तथा ।
शशिनी चैव च स्वस्था सम्पूर्णमण्डलोदया ।। ७९

पुष्टिश्चामृतपूर्णा च भगमाला स्वरूपिणी ।
भगयन्त्राश्रया शंभुरूपा संयोगयोगिनी ।। ८०

द्राविणी बीजरूपा च ह्यक्षुब्धा साधकप्रिया ।
रजःपीठमयी नाद्या सुखदा वाञ्छितप्रदा ।। ८१

रजस्संवित् रजश्शक्तिः शुक्लबिन्दु स्वरूपिणी ।
सर्वसाक्षी सामरस्या शिवशक्तिमयी प्रभा ।। ८२

संयोगानन्दनिलया संयोगप्रीतिमातृका।
संयोगकुसुमानन्दा संयोगयोगपद्धतिः ॥ ८३

संयोगसुखदावस्था चिदानन्दार्घ्यसेविता।
अर्घ्यपूज्या च संपत्तिः अर्घ्यदाभिन्नरूपिणी ॥ ८४

सामरस्यपरा प्रीता प्रियसंगमरंगिणी।
ज्ञानदूती ज्ञानगम्या ज्ञानयोनिश्शिवालया ॥ ८५

चित्कला सत्कला ज्ञानकला संवित्कलात्मिका।
कलाचतुष्टयी पद्मवासिनी सूक्ष्मरूपिणी ॥ ८६

हंसकेलिस्थलस्वस्था हंसद्वयविकासिनी।
विरागिता मोक्षकला परमात्मकलावती ॥ ८७

विद्याकलान्तरात्मस्था चतुष्टयकलावती।
विद्यासंतोषणा तृप्तिः परब्रह्मप्रकाशिनी ॥ ८८

परमात्मपरा वस्तुलीना शक्तिचतुष्टयी।
शान्तिर्बोधकला व्याप्तिः परज्ञानात्मिका कला ॥ ८९

पश्यन्ती परमात्मस्था चान्तरात्मकला शिवा।
मध्यमा वैखरी चात्म कलाऽऽनन्दकलावती ॥ ९०

तरुणी तारका तारा शिवलिङ्गालयात्मवित्।
परस्परस्वभावा च ब्रह्मज्ञानविनोदिनी ॥ ९१

रामोल्लासा च दुर्धर्षा परमार्घ्यप्रिया रमा।
जात्यादिरहिता योगिन्यानन्दमात्रपद्धतिः ॥ ९२

कान्ता शान्ता दान्तगतिः कलिता होमपद्धतिः।
दिव्यभावप्रदा दिव्या वीरसूर्वीरभावदा ॥ ९३

पशुदेहा वीरगतिः वीरहंसमनोदया।
मूर्धाभिषिक्ता राजश्रीः क्षत्रियोत्तममातृका।। ९४

शस्त्रास्त्रकुशला शोभा रथस्था युद्धजीविका।
अश्वारूढा गजारूढा भूतोक्तिः सुरसुश्रया।। ९५

राजनीतिश्शान्तिकर्त्री चतुरङ्गबलाश्रया।
पोषिणी शरणा पद्मपालिका जयपालिका।। ९६

विजया योगिनी यात्रा परसैन्यविमर्दिनी।
पूर्णवित्ता वित्तगम्या वित्तसंचय शालिनी।। ९७

महेशी राज्यभोगा च गणिकागणभोगभृत्।
उकारिणी रमा योग्या मन्दसेव्या पदात्मिका।। ९८

सैन्यश्रेणी शौर्यरता पताकाध्वजमालिनी।
सुच्छत्रा चामरश्रेणिः युवराजविवर्धिनी।। ९९

पूजा सर्वस्वसंभारा पूजापालनलालसा।
पूजाभिपूजनीया च राजकार्यपरायणा।। १००

ब्रह्मक्षत्रमयी सोमसूर्यवह्निस्वरूपिणी।
पौरोहित्यप्रिया साध्वी ब्रह्माणी यन्त्रसंततिः।। १०१

सोमपानजनाप्रीता योजनाध्वगतिक्षमा।
प्रीतिग्रहा परा दात्री श्रेष्ठजातिः सताङ्गतिः।। १०२

गायत्री वेदविद्ध्येया दीक्षा सन्तोषतर्पणा।
रत्नदीधितिविद्युत्सहसना वैश्यजीविका।। १०३

कृषिर्वाणिज्यभूतिश्च वृद्धिदा वृद्धसेविता।
तुलाधारा स्वप्नकामा मानोन्मानपरायणा।। १०४

श्रद्धा विप्रगतिः कर्मकरी कौतुकपूजिता।
नानाभिचारचतुरा वारस्त्रीश्रीः कलामयी॥ १०५

सुकर्णधारा नौपारा सर्वाशा रतिमोहिनी।
दुर्गा विन्ध्यवनस्था च कालदर्पनिषूदिनी॥ १०६

भूभारशमनी कृष्णा रक्षोराक्षससाहसा।
विविधोत्पातशमनी समया सुरसेविता॥ १०७

पञ्चावयववाक्यश्रीः प्रपञ्चोद्यानचन्द्रिका।
सिद्धिसंदोहसंसिद्धयोगिनीबृन्दसेविता॥ १०८

नित्या षोडशिकारूपा कामेशी भगमालिनी।
नित्यक्लिन्ना निराधारा वह्निमण्डलवासिनी॥ १०९

महावज्रेश्वरी नित्यशिवदूतीति विश्रुता।
त्वरिता प्रथिता ख्याता विख्याता कुलसुन्दरी॥ ११०

नित्या नीलपताका च विजया सर्वमङ्गला।
ज्वालामाला विचित्रा च महात्रिपुरसुन्दरी॥ १११

गुरुबृन्दा परगुरुः प्रकाशानन्ददायिनी।
शिवानन्दा नादरूपा शक्रानन्दस्वरूपिणी॥ ११२

देव्यानन्दा नादमयी कौलेशानन्दनाथिनी।
शुक्लदेव्यानन्दनाथा कुलेशानन्ददायिनी॥ ११३

दिव्यौघसेविता दिव्यभोगदानपरायणा।
क्रीडानन्दा क्रीडमाना समयानन्ददायिनी॥ ११४

वेदानन्दा पार्वती च सहजानन्ददायिनी।
सिद्धौघगुरुरूपा चाप्यपरा गुरुरूपिणी॥ ११५

गगनानन्दनाथा च विश्वाद्यानन्ददायिनी ।
विमलानन्दनाथा च मदनानन्ददायिनी ।। ११६

भुवनानन्दनाथा च लीलोद्यानप्रिया गतिः ।
स्वात्मान्दविनोदा च प्रियाद्यानन्दनाथिनी ।। ११७

मानवाद्या गुरुश्रेष्ठा परमेष्ठि गुरुप्रभा ।
परमाद्या गुरुश्शक्तिः स्वगुरोः कीर्तनप्रिया ।। ११८

त्रैलोक्यमोहनाख्या च सर्वाशापरिपूरका ।
सर्वसंक्षोभिणी पूर्वाम्नाया चक्रत्रयालया ।। ११९

सर्वसौभाग्यदात्री च सर्वार्थसाधकप्रिया ।
सर्वरक्षाकरी साधुर्दक्षिणाम्नायदेवता ।। १२०

मध्यचक्रैकनिलया पश्चिमाम्नायदेवता ।
नवचक्रकृतावासा कौबेराम्नायदेवता ।। १२१

बिन्दुचक्रकृतावासा मध्यसिंहासनेश्वरी ।
श्रीविद्या नवदुर्गा च महिषासुरमर्दिनी ।। १२२

सर्वसाम्राज्यलक्ष्मीश्च अष्टलक्ष्मीश्च संश्रुता ।
शैलेन्द्रतनया ज्योतिः निष्कला शाम्भवी उमा ।। १२३

अजपा मातृका चेति शुक्लवर्णा षडानना ।
पारिजातेश्वरी चैव त्रिकूटा पञ्चबाणदा ।। ११४

पञ्चकल्पलता चैव त्र्यक्षरी मूलपीठिका ।
सुधाश्रीरमृतेशानी ह्यन्नपूर्णा च कामधुक् ।। १२५

पाशहस्ता सिद्धलक्ष्मीः मातङ्गी भुवनेश्वरी ।
वाराही नवरत्नानामीश्वरी च प्रकीर्तिदा ।। १२६

परं ज्योतिः कोशरूपा सैन्धवी शिवदर्शना।
परापर स्वामिनी च शाक्तदर्शनविश्रुता ।। १२७

ब्रह्मदर्शनरूपा च शिवदर्शनरूपिणी।
विष्णुदर्शनरूपा च स्रष्टृदर्शनरूपिणी ।। १२८

सौरदर्शनरूपा च स्थितिचक्रकृताश्रया।
बौद्धदर्शनरूपा च तुरीया बहुरूपिणी ।। १२९

तत्वमुद्रास्वरूपा च प्रसन्ना ज्ञानमातृका।
सर्वोपचारसन्तुष्टा हृन्मयी शीर्षदेवता ।। १३०

शिखास्थिता वर्ममयी नेत्रत्रयविलासिनी।
अस्त्रस्था चतुरस्रस्था द्वारस्था द्वारदेवता ।। १३१

अणिमा पश्चिमस्था च दक्षिणद्वारदेवता।
वशित्वा वायुकोणस्था प्राकाम्येशानदेवता ।। १३२

महिमापूर्वनाथा च लघिमोत्तरदेवता।
अग्निकोणस्थगरिमा प्राप्तिर्नैऋतिवासिनी ।। १३३

ईशित्वसिद्धिसुरथा सर्वकामोर्ध्ववासिनी।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।। १३४

वाराह्यैन्द्री च चामुण्डा वामा ज्येष्ठा सरस्वती।
क्षोभिणी द्राविणी रौद्री काल्युन्मादनकारिणी ।। १३५

खेचरा कालकरणी च बलानां विकरणी तथा।
मनोन्मनी सर्वभूतदमनी सर्वसिद्धिदा ।। १३६

बलप्रमथिनी शक्तिः बुद्ध्याकर्षणरूपिणी।
अहंकाराकर्षिणी च शब्दाकर्षणरूपिणी ।। १३७

स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी।
रसाकर्षणरूपा च गन्धाकर्षणरूपिणी॥ १३८

चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी।
स्मृत्याकर्षणरूपा च नामाकर्षणरूपिणी॥ १३९

बीजाकर्षणरूपा च ह्यात्माकर्षणरूपिणी।
अमृताकर्षिणी चैव शरीराकर्षणी तथा॥ १४०

षोडशस्वरसंपन्ना स्रवत्पीयूषमण्डिता।
त्रिपुरेशी सिद्धिदात्री कलादर्शनवासिनी॥ १४१

सर्वसंक्षोभचक्रेशी शक्तिर्गुह्यतराभिधा।
अनङ्गकुसुमाशक्तिः तथैवानङ्गमेखला॥ १४२

अनङ्गमदनाऽ नङ्गमदनातुररूपिणी।
अनङ्गरेखा चानङ्गवेगानङ्गाङ्कुशाभिधा॥ १४३

अनङ्गमालिनी चैव ह्यष्टवर्गाधिगामिनी।
वस्वष्टककृतावासा श्रीमत्त्रिपुरसुन्दरी। १४४

सर्वसाम्राज्यसुभगा सर्वभाग्यप्रदेश्वरी।
संप्रदायेश्वरी सर्वसंक्षोभणकरी तथा॥ १४५

सर्वविद्रावणी सर्वाकर्षिणीरूपकारिणी।
सर्वाह्लादनशक्तिश्च सर्वसम्मोहिनी तथा॥ १४६

सर्वस्तम्भनशक्तिश्च सर्वजृम्भणकारिणी।
सर्ववश्यकशक्तिश्च तथा सर्वानुरञ्जनी॥ १४७

सर्वोन्मादनशक्तिश्च तथा सर्वार्थसाधिका।
सर्वसंपत्तिदा चैव सर्वमातृमयी तथा॥ १४८

सर्वद्वन्द्वक्षयकरी सिद्धिस्त्रिपुरवसिनी ।
चतुर्दशारचक्रेशी कुलयोगसमन्वया ।। १४९

सर्वसिद्धिप्रदा चैव सर्वसंपत्प्रदा तथा ।
सर्वप्रियकरी चैव सर्वमङ्गलकारिणी ।। १५०

सर्वकामप्रपूर्णा च सर्वदुःखविमोचिनी ।
सर्वमृत्युप्रशमनी सर्व विघ्नविनाशिनी ।। १५१

सर्वाङ्गसुन्दरी चैव सर्वसौभाग्यदायिनी ।
त्रिपुरा श्रीश्च सर्वार्थसाधिका दशकोणगा ।। १५२

सर्वरक्षाकरी चैव ईश्वरी योगिनी तथा ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा ।। १५३

सर्वज्ञानमयी चैव सर्वव्याधिविनाशिनी ।
सर्वाधारस्वरूपा च सर्वपापहरा तथा ।। १५४

सर्वानन्दमयी चैव सर्वरक्षास्वरूपिणी ।
तथैव च महाशक्तिः सर्वेप्सितफलप्रदा ।। १५५

अन्तर्दशारचक्रस्था तथा त्रिपुरमालिनी ।
सर्वरोगहरा चैव रहस्ययोगिनी तथा ।। १५६

वाग्देवी वशिनी चैव तथा कामेश्वरी तथा ।
मोदिनी विमला चैव ह्यरुणा जयिनी तथा ।। १५७

शिवकामप्रदा देवी शिवकामस्य सुन्दरी ।
ललिता ललिताध्यानफलदा शुभकारिणी ।। १५८

सर्वेश्वरी कौलिनी च वसुवंशाभिवर्द्धिनी ।
सर्वकामप्रदा चैव परापररहस्यवित् ।। १५९

त्रिकोणचतुरश्रस्थ कामेश्वर्यायुधात्मिका।
कामेश्वरीबाणरूपा कामेशी चापरूपिणी ॥ १६०

कामेशी पाशहस्ता च कामेश्यंकुशरूपिणी।
कामेश्वरी रुद्रशक्तिः अग्निचक्रकृतालया ॥ १६१

कामाभिन्ना कामदोग्ध्री कामदा च त्रिकोणगा।
दक्षकोणेश्वरी विष्णुशक्तिर्जालन्धरालया ॥ १६२

सूर्यचक्रालया वामकोणगा सोमचक्रगा।
भगमाला बृहच्छक्ति पूर्णा पूर्वास्रारागिणी ॥ १६३

श्रीमत्त्रिकोणभुवना त्रिपुराख्य महेश्वरी।
सर्वानन्दमयीशानी बिन्दुगातिरहस्यगा ॥ १६४

परब्रह्मस्वरूपा च महात्रिपुरसुन्दरी।
सर्वचक्रान्तरस्था च सर्वचक्राधिदेवता ॥ १६५

सर्वचक्रेश्वरी सर्वमन्त्राणामीश्वरी तथा।
सर्वविद्येश्वरी चैव सर्ववागीश्वरी तथा ॥ १६६

सर्वयोगेश्वरी सर्वपीठेश्वर्यखिलेश्वरी।
सर्वकामेश्वरी सर्वतत्वेश्वर्यागमेश्वरी ॥ १६७

शक्तिः शक्तिभृदुल्लासा निर्द्वन्द्वाद्वैतगर्भिणी।
निष्प्रपञ्चा प्रपञ्चाभा महामाया प्रपञ्चसूः ॥ १६८

सर्वविश्वोत्पत्तिधात्री परमानन्दकारणा।
लावण्यसिन्धुलहरी सुन्दरीतोषमन्दिरा ॥ १६९

शिवकामसुन्दरी देवी सर्वमङ्गलदायिनी।
इतिनाम्नां सहस्रं च गदितं इष्टदायकम् ॥ १७०

## ।। उत्तरपीठिका ।।

सहस्रनाम मन्त्राणां सारमाकृष्य पार्वति ।
रचितं हि मया चैतत् सिद्धिदं परमोक्षदम् ।। १

अनेन स्तुवतो नित्यं अर्धरात्रे निशामुखे ।
प्रातः काले च पूजायां पठनं सर्वकामदम् ।। २

सर्वसाम्राज्यसुखदा सुन्दरी परितुष्यति ।
रत्नानि विविधान्यस्य वित्तानि प्रचुराणि च ।। ३

मनोरथरथस्थानि ददाति परमेश्वरी ।
पुत्रपौत्राश्च वर्धन्ते सन्ततिस्सार्वकालिका ।। ४

शात्रवस्तस्य नश्यन्ति वर्धन्ते च बलानि च ।
व्याधयस्तस्य नश्यन्ति लभते चौषधानि च ।। ५

मन्दिराणि विचित्राणि राजन्ते तस्य सर्वदा ।
कृषिः फलवती तस्य भूमिः कामाखिलप्रदा ।। ६

स्थिरं जनपदं तस्य राज्यं तस्य निरङ्कुशम् ।
मातङ्गास्तुरगास्तुङ्गाः सिञ्चन्तो मदवारिभिः ।। ७

सैनिकाश्च विराजन्ते तुष्टाः पुष्टास्तुरङ्गमाः ।
पूजाः शश्वत् विवर्धन्ते निर्विवादाश्च मन्त्रिणः ।। ८

ज्ञातयस्तस्य तुष्यन्ति बान्धवाः विगतज्वराः ।
भृत्यास्तस्य वशे नित्यं वर्तन्तेऽस्य मनोनुगाः ।। ९

गद्यपद्यमयी वाणी वाक्चातुर्यसुसंभृता ।
समग्र सुखसंपत्ति शालिनी लास्यमालिनी ।। १०

नानापदमयी वाणी तस्य गङ्गाप्रवाहवत् ।
अदृष्टान्यपि च शास्त्राणि प्रकाशन्ते निरन्तरम् ।। ११

निग्रहः परवाक्यानां सभायां तस्य जायते।
स्तुवन्ति कृतिनस्तं वै राजानो दासवत्तथा ।। १२

शस्त्राण्यस्त्राणि तद्गात्रे जनयन्ति रुजो नहि।
मातङ्गाः तस्य वशगाः सर्पवर्या भवन्ति च ।। १३

विषं निर्विषतां याति पानीयममृतं भवेत्।
परसेनास्तम्भनं च प्रतिवादिविजृम्भणम् ।। १४

नवरात्रेण जायन्ते सततन्यासयोगतः ।
अहोरात्रं पठेद्यस्तु स्तोत्रं संयतमानसः ।। १५

वशाः तस्योपजायन्ते सर्वे लोकाः सुनिश्चितम्।
षण्मासाभ्यासयोगेन देवा यक्षाश्च किन्नराः ।। १६

सिद्धा महोरगास्सर्वे वशमायान्ति निश्चयम्।
नित्यं कामकलां न्यस्यन् यः पठेत् स्तोत्रमुत्तमम् ।। १७

मदनोन्मादिनी लीलापुरस्त्री तद्वशानुगा।
लावण्यमदना साक्षात् विदग्धमुखचन्द्रिका ।। १८

प्रेमपूर्णाश्रुनयना सुन्दरी वशगा भवेत्।
भूर्जपत्रे रोचनेन कुङ्कुमेन वरानने ।। १९

धातुरागेण वा देवी मूलमन्त्रं विलिख्य च।
रक्षार्थं भस्म विन्यस्य पुटीकृत्य समन्त्रकम् ।। २०

सुवर्णरौप्यखचिते सुषिरे स्थाप्य यत्नतः ।
संपूज्य तत्र देवेशीं पुनरादाय भक्तितः ।। २१

धारयेन्मस्तके कण्ठे बाहुमूले तथा हृदि।
नाभौ च विधृतं धन्यं जयदं सर्वकामदम् ।। २२

रक्षाकरं नान्यदस्मात् विद्यते भुवनत्रये।
ज्वररोगनृपाविष्टभयहृत् भूतिवर्धनम्॥ २३

बलवीर्यकरं चाथ भूतशत्रुविनाशनम्।
पुत्रपौत्रगुणश्रेयोवर्धकं धनधान्यकृत्॥ २४

य इदं पठति स्तोत्रं स सर्वं लभते नरः।
यद्गृहे लिखितं स्तोत्रं तिष्ठेदेतद् वरानने॥ २५

तत्र तिष्ठाम्यहं नित्यं हरिश्च कमलासनः।
वसन्ति सर्वतीर्थानि गौरी लक्ष्मीस्सरस्वती॥ २६

शिवकामेश्वरीं ध्यात्वा पठेन्नामसहस्रकम्।
असकृत् ध्यानपाठेन साधकः सिद्धिमाप्नुयात्॥ २७

शुक्रवारे पौर्णमास्यां पठन्नामसहस्रकम्।
पूजां यः कुरुते भक्त्या वाञ्छितं लभते ध्रुवम्॥ २८

शिवकामेश्वरीमन्त्रः मन्त्रराजः प्रकीर्तितः।
तदभ्यासात् साधकश्च सिद्धिमाप्नोत्यनुत्तमाम्॥ २९

नासाधकाय दातव्यमश्रद्धाय शठाय च।
भक्तिहीनाय मलिने गुरुनिन्दापराय च॥ ३०

अलसायायत्नवतेऽशिवभक्ताय सुन्दरि।
विष्णुभक्तिविहीनाय न दातव्यं कदाचन॥ ३१

देयं भक्तवरायैतत् भुक्तिमुक्तिकरं शुभम्।
सिद्धिदं भवरोगघ्नं स्तोत्रमेतद्वरानने॥ ३२

लतायोगे पठेद्यस्तु तस्य क्षिप्रं फलं भवेत्।
सैव कल्पलता तस्य वाञ्छाफलकरी स्मृता॥ ३३

पुष्पितां यां लतां सम्यक् दृष्ट्वा श्रीललितां स्मरन्।
अक्षुब्धः प्रपठेद्यस्तु स यज्ञक्रतुपुण्यभाक्॥ ३४

विकल्परहितो यो हि निर्विकल्पः स्वयं शिवः।
नैतत्प्रकाशयेद्भक्तः कुशिष्यायाल्पमेधसे॥ ३५

अनेकजन्मपुण्येन दीक्षितो जायते नरः।
तत्राप्यनेकभाग्येन शैवो विष्णु परायणः॥ ३६

तत्राप्यनेकपुण्येन शक्तिभावः प्रजायते।
महोदयेन तत्रापि सुन्दरीभावभाग्भवेत्॥ ३७

सहस्रनाम्नां तत्रापि कीर्तनं च सुदुर्लभम्।
यत्र जन्मनि सा नित्यं पूर्वपुण्यवशाद्भवेत्॥ ३८

जीवन्मुक्तो भवेत्तस्य कर्तव्यं नावशिष्यते।
अवधूतत्वमेव स्यात् न वर्णाश्रमकल्पना॥ ३९

ब्रह्मादयोऽपि देवेशीं प्रार्थयन्ते तदव्ययाम्।
हंसत्वं भक्तिभावेन परमानन्दकारणम्॥ ४०

देवोऽसौ सर्वदा शक्तिं भावयन्नेव संस्थितः।
स्वयं शिवस्तु विज्ञेयः सुन्दरीभावलंपटः॥ ४१

ब्रह्मानन्दमयीं ज्योत्स्नां सदाशिवपरायणाम्।
शिवकामेश्वरीं देवीं भावयन् सिद्धिमाप्नुयात्॥ ४२

आह्लादः सुन्दरीध्यानात् सुन्दरीनामकीर्तनात्।
सुन्दरीदर्शनाच्चैव सदानन्दः प्रजायते॥ ४३

इति श्रीरुद्रयामले उमामहेशसंवादे शिवकाम सुन्दर्याः श्रीमत्त्रिपुरसुन्दर्याः षोडशार्णायाः तुरीयसहस्रनामस्तोत्रं सम्पूर्णम्

॥ श्रीमङ्गलाम्बायै नमः

# श्री शिवकामसुन्दरी सहस्रनामावलिः

ओं ऐं क्लीं ह्रीं

श्रीशिवायै नमः । शिवकाम्यै नमः । सुन्दर्यै नमः । भुवनेश्वर्यै नमः । आनन्दसिन्धवे नमः । आनन्दायै नमः । आनन्दमूर्तये नमः । विनोदिन्यै नमः । त्रैपुर्यै सुन्दर्यै नमः । प्रेमपाथो निधये नमः ।, (१०) अनुत्तमायै नमः । रामोल्लासायै नमः । परायै नमः । भूत्यै नमः । विभूत्यै नमः । शङ्करप्रियायै नमः । शृङ्गारमूर्तये नमः । विरतायै नमः । रसानुभवरोचनायै नमः । परमानन्दलहर्यै नमः । (२०)

रत्यै नमः । अङ्गवत्यै नमः । सत्यै नमः । रङ्गमालायै नमः । अनङ्गकलाकेलये नमः । कैवल्यदायै नमः । कलायै नमः । रसकल्पायै नमः । कल्पलतायै नमः । कुतूहलवत्यै नमः । (३०) मत्यै नमः । विनोददुग्धायै नमः । सुस्निग्धायै नमः । मुग्धमूर्तये नमः । मनोहरायै नमः । बालार्ककोटि-किरणायै नमः । चन्द्रकोटिसुशीतलायै नमः । स्रवत्पीयूष-दुग्धाड्ग्यै नमः । सङ्गीतनटिकायै नमः । शिवायै नमः । (४०)

कुरङ्गनयनायै नमः । कान्तायै नमः । सुखसन्तत्यै नमः । इन्दिरायै नमः । मङ्गलायै नमः । मधुरापाङ्गायै नमः । रञ्जन्यै नमः । रमणीरत्यै नमः । राजराजेश्वर्यै नमः । राज्यै नमः । (५०) महेन्द्रपरिवन्दितायै नमः । प्रपञ्चगत्यै नमः । ईशान्यै नमः । सामरस्यपरायणायै नमः । हंसोल्लासायै नमः । हंसगत्यै

नमः । शिञ्जत्कनकनूपुरायै नमः । मेरुमन्दरवक्षोजायै नमः । सृणिपाश-वरायुधायै नमः । शंख(शर)कोदण्डरक्ताब्ज-पाणिद्वयविराजितायै नमः (६०)

चन्द्रबिम्बाननायै नमः । चारुमकुटोत्तंसचन्द्रिकायै नमः। सिन्दूरतिलकायै नमः । चारुधम्मिल्लामलमालिकायै नमः । मन्दार दाममुदितायै नमः । रक्तपुष्पविभूषितायै नमः । सुवर्णाभरणप्रीतायै नमः । मुक्तादाममनोहरायै नमः । ताम्बूलपूरवदनायै नमः । मदनानन्दमानसायै नमः । सुखा-राध्यायै नमः । तपस्सारायै नमः । कृपावारिधये नमः । ईश्वर्यै नमः । वक्षः स्थललसन्मग्नायै नमः । प्रभायै नमः । मधुरसोन् मुखायै नमः । बिन्दुनादात्मिकायै नमः । चारुरसितायै नमः । तुर्यरूपिण्यै नमः । (८०)

कमनीयाकृतये नमः । धन्यायै नमः । शङ्करप्रीतिमञ्जर्यै नमः। कन्यायै नमः । कलावत्यै नमः । मात्रे नमः । गजेन्द्रगमनायै नमः । शुभायै नमः । कुमार्यै नमः । करभोरुश्रिये नमः । (९०) रूपलक्ष्म्यै नमः । सुराजितायै नमः । सन्तोषसीमायै नमः । संपत्त्यै नमः । शातकुंभप्रियायै नमः । द्युत्यै नमः। परिपूर्णायै नमः । जगद्धात्र्यै नमः । विधात्र्यै नमः । बलवर्धिन्यै नमः ।।(१००)

सार्वभौमनृपश्रियै नमः । साम्राज्यगतिरासिकायै नमः । सरोजाक्ष्यै नमः । दीर्घदृष्ट्यै नमः । सौचक्षणविचक्षणायै नमः । रङ्गस्रवन्त्यै नमः । रसिकायै नमः । प्रधानरसरूपिण्यै नमः । रससिन्धवे नमः । सुगात्र्यै नमः । (११०) युवत्यै नमः। मैथुनोन्मुख्यै नमः । निरन्तरायै नमः । रसासक्तायै नमः । शक्त्यै नमः । त्रिभुवनात्मिकायै नमः । कामाक्ष्यै नमः ।

कामनिष्ठायै नमः । कामेश्यै नमः । भगमङ्गलायै नमः । (१२०)

सुभगायै नमः । भगिन्यै नमः । भोग्यायै नमः । भाग्यदायै नमः । भगदायै नमः । भगायै नमः । भगलिङ्गानन्दकलायै नमः। भगमध्यनिवासिन्यै नमः । भगरूपायै नमः । भगमय्यै नमः ।(१३०) भगयन्त्रायै नमः । भगोत्तमायै नमः । योनये नमः । जयायै नमः । कामकलायै नमः । कुलामृतपरायणायै नमः । कुलकुण्डालयायै नमः । सूक्ष्मजीवस्फुलिङ्गरूपिण्यै नमः। मूलस्थितायै नमः । केलिरतायै नमः ।(१४०)

वलयाकृत्यै नमः । ईडितायै नमः । सुषुम्नायै नमः । कमलानन्दायै नमः । चित्रायै नमः । कूर्मगतये नमः । गिरये नमः । सितारुणायै नमः । सिन्धुरूपायै नमः । प्रवेगायै नमः । (१५०) निर्धन्यै नमः । क्षमायै नमः । घण्टाकोटिरसारावायै नमः । रविबिम्बोत्थितायै नमः । अद्भुतायै नमः । नादान्तलीनायै नमः । संपूर्णायै नमः । प्रणवायै नमः । बहुरूपिण्यै नमः । भृङ्गारावायै नमः । (१६०)

वशगतये नमः । वागीश्यै नमः । मधुरध्वनये नमः । वर्णमालायै नमः । सिद्धिकलायै नमः । षट्चक्रक्रमवासिन्यै नमः । मणिपूरस्थितायै नमः । स्निग्धायै नमः । कूर्मचक्र-परायणायै नमः । मूलकेलिरतायै नमः ।(१७०) साध्व्यै नमः। स्वाधिष्ठाननिवासिन्यै नमः । अनाहतगत्यै नमः। दीपायै नमः। शिवानन्दमयद्युतये नमः । विरुद्धबन्धायै नमः । संबुद्धायै नमः। जीवभोक्त्र्यै नमः । स्थलीरतायै नमः । आज्ञाचक्रो-ज्ज्वलस्फारस्फुरन्त्यै नमः ।। १८०

निर्गतद्विषायै नमः । चन्द्रिकायै नमः । चन्द्रकोटीश्यै नमः । सूर्यकोटिप्रभामय्यै नमः । पद्मरागारुणच्छायायै नमः । नित्याह्लादमय्यै नमः । प्रभायै नमः । महाशून्यालयायै नमः । चन्द्रमण्डलामृतनन्दितायै नमः । कान्ताङ्गसङ्गमुदितायै नमः ।(१९०) सुधामाधुर्यसंभृतायै नमः । महाचन्द्रस्मिता-लिप्तयै नमः । मृत्पात्रस्थायै नमः । सुधाद्युतये नमः । स्रवत्पीयूषसंसक्तायै नमः । शश्वत्कुण्डालयायै नमः । भवायै नमः । श्रेयोद्युतये नमः । प्रत्यगर्थायै नमः । सेवाफलवत्यै नमः ।(२००)

मह्यै नमः । शिवायै नमः । शिवप्रियायै नमः । शैवायै नमः । शङ्कर्यै नमः । शांभव्यै नमः । विभवे नमः । स्वयंभुवे नमः । स्वप्रियायै नमः । स्वीयायै नमः ।(२१०) स्वकीयायै नमः । जनमातृकायै नमः । सुरामायै नमः । स्वप्रियायै नमः । श्रेयसे नमः । स्वाधिकाराधिनायिकायै नमः । मण्डलायै नमः । जनन्यै नमः । मान्यायै नमः । सर्वमङ्गलसन्तत्यै नमः । (२२०)

भद्रायै नमः । भगवत्यै नमः । भाव्यायै नमः । कलितार्धेन्दुभासुरायै नमः । कल्याणललितायै नमः । काम्यायै नमः । कुकर्मकुमतिप्रदायै नमः । कुरङ्गाक्ष्यै नमः । क्षीरनेत्रायै नमः । क्षीरायै नमः । (२३०) मधुरसोन्मदायै नमः । वारुणीपानमुदितायै नमः । मदिरामुदितायै नमः । स्थिरायै नमः । कादम्बरी पानरुचये नमः । विपाशायै नमः । पशुभावनायै नमः । मुदितायै नमः । ललितापाङ्गायै नमः । दरान्दोलितदीर्घदृशे नमः । (२४०)

दैत्यकुलानलशिखायै नमः । मनोरथसुधाद्युतये नमः । सुवासिन्यै नमः । पीतगात्र्यै नमः । पीनश्रोणिपयोधरायै नमः । सुचारुकबर्यै नमः । दध्युदध्युत्थितमौक्तिकायै नमः । बिम्बाधरद्युतये नमः । मुग्धायै नमः । प्रवालोत्तमदीधितये नमः । (२५०) तिलप्रसूननासाग्रायै नमः । हेममौक्तिककोरकायै नमः । निष्कलङ्केन्दुवदनायै नमः । बालेन्दुवदनोज्ज्वलायै नमः । नृत्यन्त्यै नमः । अञ्जन नेत्रान्तायै नमः । प्रस्फुरत्कर्णशाष्कुल्यै नमः । भालचन्द्रात पोन्नद्धायै नमः । मणिसूर्यकिरीटिन्यै नमः । कचौघचंपकश्रेणीमालिनीदाममण्डितायै नमः ।(२६०)

हेममाणिक्यताटङ्कायै नमः । मणिकाञ्चनकुण्डलायै नमः । सुचारुचुबुकायै नमः । कम्बुकण्ठ्यै नमः । कुण्डावल्यै नमः । रमायै नमः । गङ्गातरङ्गहारोर्मये नमः । मत्तकोकिलनिस्वनायै नमः । मृणालविलसद्बाहुपाशाङ्कुशधनुर्धरायै नमः । केयूरकङ्कणश्रेण्यै नमः । (२७०) नानामणिमनोरमायै नमः । ताम्रपङ्कजपाणिश्रियै नमः । नवरत्नप्रभावत्यै नमः । अङ्गुलीयमणिश्रेण्यै नमः । कान्तिमङ्गल सन्तत्यै नमः । मन्दरद्वन्द्वसुकुचायै नमः । रोमराजिभुजङ्गिकायै नमः । गंभीरनाभ्यै नमः । त्रिवलीभङ्गुरायै नमः । क्षीणमध्यमायै नमः । (२८०)

रणत्काञ्चीगुणानद्धायै नमः । पट्टांशुकनितम्बिकायै नमः । मेरुसन्धिनितम्बाढ्यायै नमः । गजशुण्डोरुयुग्मयुजे नमः । सुजानवे नमः । मदनानन्दमयजङ्घाद्वयान्वितायै नमः । गूढगुल्फायै नमः । मञ्जु शिञ्जन्मणि नूपुरमण्डितायै नमः ।

पदद्वन्द्व जितांभोजायै नमः । नखचन्द्रावलीप्रभायै नमः ॥ (२९०) सुसीमप्रपदायै नमः । राजहंसमत्तेभमन्दगायै नमः । योगिध्येयपदद्वन्द्वायै नमः । सौन्दर्यामृतसारिण्यै नमः । लावण्यसिन्धवे नमः । सिन्दूरतिलकायै नमः । कुटिलालकायै नमः । साधुसीमन्तिन्यै नमः । सिद्धबुद्धबृन्दारकोदयायै नमः । बालार्ककिरणश्रेणिशोणश्रियै नमः ॥ (३००)

प्रेमकामदुहे नमः । रसगंभीररसरस्यै नमः । पद्मिन्यै नमः । रससारसायै नमः । प्रसन्नासन्नवरदायै नमः । शारदायै नमः । भुवि भाग्यदायै नमः । नटराजप्रियायै नमः । विश्वानाद्यायै नमः । नर्तकनर्तक्यै नमः । (३१०) चित्रयन्त्रायै नमः । चित्रतन्त्रायै नमः । चित्रविद्यावलीगत्यै नमः । चित्रकूटायै नमः । त्रिकूटायै नमः । पञ्चकूटायै नमः । पञ्चम्यै नमः । चतुष्कूटायै नमः । शंभुविद्यायै नमः । षट्कूटायै नमः ॥ (३२०)

विष्णुपूजितायै नमः । कूटषोडशसंपन्नायै नमः । तुरीयायै नमः । परमायै कलायै नमः । षोडश्यै नमः । मन्त्रयन्त्राणामीश्वर्यै नमः । मेरुमण्डलायै नमः । षोडशार्णायै नमः । त्रिवर्णायै नमः । बिन्दुनादस्वरूपिण्यै नमः । (३३०) वर्णातीतायै नमः । वर्णमतायै नमः । शब्दब्रह्ममय्यै नमः । सुखायै नमः । सुखज्योत्स्नानन्दविद्युते नमः । अन्तराकाशदेवतायै नमः । चैतन्यायै नमः । विधिकूटात्मने नमः । कामेश्यै नमः । स्वप्नदर्शनायै नमः । (३४०)

स्वप्नरूपायै नमः । बोधकर्यै नमः । जाग्रत्यै नमः । जागराश्रयायै नमः । स्वप्नाश्रयायै नमः । सुषुप्तिस्थायै नमः ।

तन्त्रमूर्त्यै नमः । माधव्यै नमः । लोपामुद्रायै नमः । कामराज्यै नमः । (३५०) माधव्यै नमः । मित्ररूपिण्यै नमः । शाङ्कर्यै नमः । नन्दिविद्यायै नमः । भास्वन्मण्डलमध्यगायै नमः । माहेन्द्रस्वर्गसंपत्त्यै नमः । दुर्वासस्सेवितायै नमः । श्रुत्यै नमः । साधकेन्द्रगत्यै नमः । साध्व्यै नमः । (३६०)

सुलिप्तायै नमः । सिद्धिकन्धरायै नमः । पुरत्रयेश्यै नमः । पुरकृते नमः । षष्ठ्यै नमः । परदेवतायै नमः । विघ्नदूर्यै नमः । भूरिगुणायै नमः । पुष्ट्यै नमः । पूजितकामदुहे नमः । (३७०) हेरम्बमात्रे नमः । गणपायै नमः । गुहाम्बायै नमः । आर्यायै नमः । नितम्बिन्यै नमः । एतस्यै नमः । सीमन्तिन्यै नमः । मोक्षदक्षायै नमः । दीक्षितमातृकायै नमः । साधकाम्बायै नमः ।(३८०)

सिद्धमात्रे नमः । साधकेन्द्रमनोरमायै नमः । यौवनोन्मादिन्यै नमः । तुङ्गस्तन्यै नमः । सुश्रोणिमण्डितायै नमः । पद्मरक्तोत्पलवत्यै नमः । रक्तमाल्यानुलेपनायै नमः । रक्तमाल्यरुचये नमः । दक्षायै नमः । शिखण्डिन्यै नमः । (३९०) अतिसुन्दर्यै नमः । शिखण्डिनृत्यसन्तुष्टायै नमः । शिखण्डिकुलपालिन्यै नमः । वसुन्धरायै नमः । सुरभये नमः । कमनीयतनवे नमः । शुभायै नमः । नन्दिन्यै नमः । त्रीक्षणवत्यै नमः । वसिष्ठालयदेवतायै नमः ।(४००)

गोलकेश्यै नमः । लोकेन्द्रायै नमः । नृलोकपरिपालिकायै नमः । हविर्धात्र्यै नमः । देवमात्रे नमः । बृन्दारकपरात्मयुजे नमः । रुद्रमात्रे नमः । रुद्रपत्न्यै नमः । मदोद्गारभरायै नमः । क्षित्यै नमः । (४१०) दक्षिणायै नमः । यज्ञसंपत्त्यै नमः ।

स्वबलायै नमः । धीरनन्दितायै नमः । क्षीरपूर्णार्णवगत्यै नमः । सुधायोनये नमः । सुलोचनायै नमः । रमायै नमः । तुङ्गायै नमः । सदासेव्यायै नमः । (४२०)

सुरसंघदयायै नमः । उमायै नमः । सुचरित्रायै नमः । चित्रवरायै नमः । सुस्तन्यै नमः । वत्सवत्सलायै नमः । रजस्वलायै नमः । रजोयुक्तायै नमः । रञ्जितायै नमः । रङ्गमालिकायै नमः । (४३०) रक्तप्रियायै नमः । सुरक्तायै नमः । रतिरङ्गस्वरूपिण्यै नमः । रजः शुक्लाक्षिकायै नमः । निष्ठायै नमः । ऋतुस्नातायै नमः । रतिप्रियायै नमः । भाव्यभाव्यायै नमः । कामकेलये नमः । स्मरभुवे नमः ।(४४०)

स्मरजीविकायै नमः । समाधिकुसुमानन्दायै नमः । स्वयंभुकुसुमप्रियायै नमः । स्वयंभुप्रेमसन्तुष्टायै नमः । स्वयंभूनिन्दकान्तकायै नमः । स्वयंभुस्थायै नमः । शक्तिपुटायै नमः । रवये नमः । सर्वस्वपेटिकायै नमः । अत्यन्तरसिकायै नमः । (४५०) दूत्यै नमः । विदग्धायै नमः। प्रीतिपूजितायै नमः । तूलिकायन्त्रनिलयायै नमः । योगपीठनिवासिन्यै नमः। सुलक्षणायै नमः । दृश्यरूपायै नमः । सर्वलक्षणलक्षितायै नमः । नानालङ्कारसुभगायै नमः । पञ्चकामशरार्चितायै नमः । (४६०)

ऊर्ध्वत्रिकोणयन्त्रस्थायै नमः । बालायै नमः । कामेश्वर्यै नमः । गुणाध्यक्षायै नमः । कुलाध्यक्षायै नमः । लक्ष्म्यै नमः । सरस्वत्यै नमः । वसन्तमदनायै नमः । उत्तुङ्गस्तन्यै नमः । कुचभरोन्नतायै नमः । (४७०) कलाधरमुख्यै नमः ।

मूर्धपाथोधये नमः । कलावत्यै नमः । दक्षपादादिशीर्षान्त षोडशस्वरसंयुतायै नमः । श्रद्धायै नमः । पूर्त्यै नमः । रत्यै नमः । भूत्यै नमः । कान्त्यै नमः । मनोरमायै नमः ।(४८०)

विमलायै नमः । योगिन्यै नमः । घोरायै नमः । मदनोन्मादिन्यै नमः । मदायै नमः । मोदिन्ये नमः । दीपिन्यै नमः । शोषिण्यै नमः । वशङ्कर्यै नमः । रजन्यन्तायै नमः । (४९०) कामकलायै नमः । लसत्कमलधारिण्यै नमः । वाममूर्धादिपादान्तषोडशस्वरसं युतायै नमः । पूषरूपायै नमः । सुमनसां सेव्यायै नमः । प्रीत्यै नमः । द्युत्यै नमः । ऋद्ध्यै नमः । सौदामिन्यै नमः । चिदे नमः । (५००)

हंसमालावृतायै नमः । शशिन्यै नमः । स्वस्थायै नमः । संपूर्णमण्डलोदयायै नमः । पुष्ट्यै नमः । अमृतपूर्णायै नमः । भगमालास्वरूपिण्यै नमः । भगयन्त्राश्रयायै नमः । शंभुरूपायै नमः । संयोगयोगिन्यै नमः । (५१०) द्राविण्यै नमः । बीजरूपायै नमः । अक्षुब्धायै नमः । साधकप्रियायै नमः। रजः पीठमय्यै नमः । नाद्यायै नमः । सुखदायै नमः । वाञ्छितप्रदायै नमः । रजस्संविदे नमः । रजश्शक्तये नमः । (५२०)

शुक्लबिन्दुस्वरूपिण्यै नमः । सर्वसाक्ष्यै नमः । सामरस्यायै नमः । शिवशक्तिमय्यै नमः । प्रभायै नमः । संयोगानन्दनिलयायै नमः । संयोगप्रीतमातृकायै नमः । संयोगकुसुमानन्दायै नमः । संयोगायोगपद्धत्यै नमः । संयोगसुखदावस्थायै नमः ।(५३०) चिदानन्दार्घ्यसेवितायै नमः । अर्घ्यपूज्यायै नमः । संपत्त्यै नमः । अर्घ्यदाभिन्न-

रूपिण्यै नमः । सामरस्यपरायै नमः । प्रीतायै नमः । प्रियसङ्गमरङ्गिण्यै नमः । ज्ञानदूत्यै नमः । ज्ञानगम्यायै नमः । ज्ञानयोनये नमः ।(५४०)

शिवालायायै नमः । चित्कलायै नमः । सत्कलायै नमः । ज्ञानकलायै नमः । संवित्कलात्मिकायै नमः । कलाचतुष्टय्यै नमः । पद्मवासिन्यै नमः । सूक्ष्मरूपिण्यै नमः । हंसकेलिस्थलस्वस्थायै नमः । हंसद्वयविकासिन्यै नमः ।(५५०) विरागितायै नमः । मोक्षकलायै नमः । परमात्मकलावत्यै नमः । विद्याकलायै नमः । अन्तरात्मस्थायै नमः । चतुष्टयकलावत्यै नमः । विद्यासन्तोषणायै नमः । तृप्त्यै नमः । परब्रह्मप्रकाशिन्यै नमः । परमात्मपरायै नमः । (५६०)

वस्तुलीनायै नमः । शक्तिचतुष्टय्यै नमः । शान्त्यै नमः । बोधकलायै नमः । व्याप्त्यै नमः । परज्ञानात्मिकायै कलायै नमः । पश्यन्त्यै नमः । परमात्मस्थायै नमः । अन्तरात्मकलायै नमः । शिवायै नमः । (५७०) मध्यमायै नमः । वैखर्यै नमः । आत्मकलायै नमः । आनन्दकलावत्यै नमः । तरुण्यै नमः । तारकायै नमः । तारायै नमः । शिवलिङ्गालयायै नमः । आत्मविदे नमः । परस्परस्वभावायै नमः । (५८०)

ब्रह्मज्ञानविनोदिन्यै नमः । रामोल्लासायै नमः । दुर्धर्षायै नमः । परमार्घ्यप्रियायै नमः । रमायै नमः । जात्यादिरहितायै नमः । योगिन्यै नमः । आनन्दमयपद्धत्यै नमः । कान्तायै नमः । शान्तायै नमः । (५९०) कलितायै नमः । होमपद्धत्यै नमः । दिव्यभावप्रदायै नमः । दिव्यायै नमः । वीरसुवे नमः । वीरभावदायै नमः । पशुदेहायै नमः । वीरगत्यै नमः । वीरहंसमनोदयायै नमः । मूर्धाभिषिक्तायै नमः ।(६००)

राज्यश्रिये नमः । क्षत्रियोत्तममातृकायै नमः । शस्त्रास्त्रकुशलायै नमः । शोभायै नमः । रथस्थायै नमः । युद्धजीविकायै नमः । अश्वारूढायै नमः । गजारूढायै नमः । भूतोक्त्यै नमः । सुरसुश्रयायै नमः । (६१०) राजनीत्यै नमः। शान्तिकर्त्र्यै नमः । चतुरङ्गबलाश्रयायै नमः । पोषिण्यै नमः । शरणायै नमः । पद्मपालिकायै नमः । जयपालिकायै नमः । विजयायै नमः । योगिन्यै नमः । यात्रायै नमः ।(६२०)

परसैन्यविमर्दिन्यै नमः । पूर्णवित्तायै नमः । वित्तगम्यायै नमः । वित्तसञ्चयशालिन्यै नमः । महेश्यै नमः । राज्यभोगायै नमः । गणिकागणभोगभृते नमः । उकारिण्यै नमः । रभायोग्यायै नमः । मन्दसेव्यायै नमः । (६३०) पदात्मिकायै नमः । सैन्यश्रेण्यै नमः । शौर्यरतायै नमः । पताकाध्वजमालिन्यै नमः । सच्छात्रायै नमः । चामरश्रेण्यै नमः । म्रुवरागविवर्धिन्यै नमः । पूजासर्वस्वसंभारायै नमः । पूजापालनलालसायै नमः । पूजाभिपूजनीयायै नमः ।(६४०)

राजकार्यपरायणायै नमः । ब्रह्मक्षत्रमय्यै नमः । सोमसूर्यवह्निस्वरूपिण्यै नमः । पौरोहित्यप्रियायै नमः । साध्व्यै नमः । ब्रह्माण्यै नमः । यन्त्रसन्तत्यै नमः । सोमपानजनाप्रीतायै नमः । योजनाध्वगतिक्षमायै नमः । प्रीतिग्रहायै नमः । (६५०)। परायै दात्र्यै नमः । श्रेष्ठजात्यै नमः । सताङ्गत्यै नमः । गायत्र्यै नमः । वेदविद्ध्येयायै नमः । दीक्षायै नमः । सन्तोषतर्पणायै नमः । रत्नदीधिति-विद्युत्सहसनायै नमः । वैश्यजीविकायै नमः । कृषये नमः । (६६०)

वाणिज्यभूतये नमः । वृद्धिदायै नमः । वृद्धसेवितायै नमः । ' तुलाधारायै नमः । स्वप्रकामायै नमः । मानोन्मानपरायणायै नमः । श्रद्धायै नमः । विप्रगतये नमः । कर्मकर्यै नमः । कौतुकपूजितायै नमः । (६७०) नानाभिचारचतुरायै नमः । वारस्त्रीश्रियै नमः । कलामय्यै नमः । सुकर्णधारायै नमः । नौपारायै नमः । सर्वाशायै नमः । रतिमोहिन्यै नमः । दुर्गायै नमः । विन्ध्यवनस्थायै नमः । कालदर्पनिषूदिन्यै नमः ।(६८०)

भूभारशमन्यै नमः । कृष्णायै नमः । रक्षोराक्षस साहसायै नमः । विविधोत्पातशमन्यै नमः । समयायै नमः । सुरसेवितायै नमः । पञ्चावयववाक्यश्रियै नमः । प्रपञ्चोद्यानचन्द्रिकायै नमः । सिद्धिसंयोगसंसिद्धयोगिनी-बृन्दसेवितायै नमः । नित्याषोडशिकारूपायै नमः । (६९०) कामेश्व्यै नमः । भगमालिन्यै नमः । नित्यक्लिन्नायै नमः । निराधारायै नमः । वह्निमण्डलवासिन्यै नमः । महावज्रेश्वर्यै नमः । 'नित्यशिवदूतीति विश्रुतायै नमः । त्वरितायै नमः । प्रथिताख्यातायै नमः । विख्यातायै नमः ।। (७००)

कुलसुन्दर्यै नमः । नित्यायै नमः । नीलपताकायै नमः । विजयायै नमः । सर्वमङ्गलायै नमः । ज्वालामालायै नमः । विचित्रायै नमः । महात्रिपुरसुन्दर्यै नमः । गुरुबृन्दायै नमः । परगुरवे नमः । (७१०) प्रकाशानन्ददायिन्यै नमः । शिवानन्दायै नमः । नादरूपायै नमः । शक्रानन्दस्वरूपिण्यै नमः । देव्यानन्दायै नमः । नादमय्यै नमः । कौलेशानन्द-नाथिन्यै नमः । शुक्लदेव्यानन्दनाथायै नमः । कुलेशानन्द-दायिन्यै नमः । दिव्यौघसेवितायै नमः । (७२०)

दिव्यभोगदानपरायणायै नमः । क्रीडानन्दायै नमः । क्रीडमानायै नमः । समयानन्ददायिन्यै नमः । वेदानन्दायै नमः । पार्वत्यै नमः । सहजानन्ददायिन्यै नमः । सिद्धौघगुरुरूपायै नमः । अपरायै गुरुरूपिण्यै नमः । गगनानन्दनाथायै नमः । (७३०) विश्वाद्यानन्ददायिन्यै नमः। विमलानन्दनाथायै नमः । मदनानन्ददायिन्यै नमः । भुवनानन्दनाथायै नमः । लीलोद्यानपरायै नमः । गत्यै नमः । स्वात्मानन्दविनोदायै नमः । प्रियाद्यानन्दनाथिन्यै नमः । मानवाद्यायै नमः । गुरुश्रेष्ठायै नमः । (७४०)

परमेष्ठिगुरुप्रभायै नमः । परमाद्यायै नमः । गुरवे नमः । शक्त्यै नमः । स्वगुरोः कीर्तनप्रियायै नमः । त्रैलोक्यमोहनाख्यायै नमः । सर्वाशापरिपूरकायै नमः । सर्वसंक्षोभिण्यै नमः । पूर्वाम्नायचक्रत्रयालयायै नमः । सर्वसौभाग्यदात्र्यै नमः । (७५०) सर्वार्थसाधकप्रियायै नमः । सर्वरक्षाकर्यै नमः । साधवे नमः । दक्षिणाम्नायदेवतायै नमः । मध्यचक्रैकनिलयायै नमः । पश्चिमाम्नायदेवतायै नमः । नवचक्रकृतावासायै नमः । कौबेराम्नायदेवतायै नमः । बिन्दुचक्रकृतावासायै नमः । मध्यसिंहासनेश्वर्यै । (७६०)

श्रीविद्यायै नमः । नवदुर्गायै नमः । महिषासुरमर्दिन्यै नमः । सर्वसाम्राज्यलक्ष्म्यै नमः । अष्टलक्ष्म्यै नमः । संश्रुतायै नमः । शैलेन्द्रतनयायै नमः । ज्योतिषे नमः । निष्कलायै नमः । शांभव्यै नमः । (७७०) उमायै नमः । अजपायै नमः । मातृकायै नमः । शुक्लवर्णायै नमः । षडाननायै नमः । पारिजातेश्वर्यै नमः । त्रिकूटायै नमः । पञ्चबाणदायै नमः । पञ्चकल्पलतायै नमः । त्र्यक्षर्यै नमः । (७८०)

मूलपीठिकायै नमः । सुधाश्रिये नमः । अमृतेशान्यै नमः । अन्नपूर्णायै नमः । कामदुहे नमः । पाशहस्तायै नमः । सिद्धलक्ष्म्यै नमः । मातङ्ग्यै नमः । भुवनेश्वर्यै नमः । वाराह्यै नमः । (७९०) नवरत्नानामीश्वर्यै नमः । प्रकीर्तिदायै नमः । परस्मै ज्योतिषे नमः । कोशरूपायै नमः । सैन्धव्यै नमः । शिवदर्शनायै नमः । परापरस्वामिन्यै नमः । शाक्तदर्शनविश्रुतायै नमः । ब्रह्मदर्शनरूपायै नमः । शिवदर्शनरूपिण्यै नमः । (८००)

विष्णुदर्शनरूपायै नमः । स्रष्टृदर्शनरूपिण्यै नमः । सौरदर्शनरूपायै नमः । स्थितिचक्र कृताश्रयायै नमः । बौद्धदर्शनरूपायै नमः । तुरीयायै नमः । बहुरूपिण्यै नमः। तत्वमुद्रास्वरूपायै नमः । प्रसन्नायै नमः । ज्ञानमातृकायै नमः । (८१०) सर्वोपचारसन्तुष्टायै नमः । हृन्मय्यै नमः । शीर्षदेवतायै नमः । शिखास्थितायै नमः । वर्ममय्यै नमः । नेत्रत्रयविलासिन्यै नमः । अस्त्रस्थायै नमः । चतुरश्रस्थायै नमः । द्वारस्थायै नमः । द्वारदेवतायै नमः । (८२०)

अणिमायै नमः । पश्चिमस्थायै नमः । दक्षिणद्वारदेवतायै नमः । वशित्वायै नमः । वायुकोणस्थायै नमः । प्राकाम्यायै नमः । ईशानदेवतायै नमः । महिमायै नमः । पूर्वनाथायै नमः । लघिमायै नमः । (८३०) उत्तरदेवतायै नमः । अग्निकोणस्थगरिमायै नमः । प्राप्त्यै नमः । नैरृति वासिन्यै नमः । ईशित्वसिद्धि सुरथायै नमः । सर्वकामायै नमः । ऊर्ध्ववासिन्यै नमः । ब्राह्म्यै नमः । माहेश्वर्यै नमः । कौमार्यै नमः । ८४०

वैष्णव्यै नमः। वाराह्यै नमः। ऐन्द्र्यै नमः। चामुण्डायै नमः। वामायै नमः। ज्येष्ठायै नमः। सरस्वत्यै नमः। क्षोभिण्यै नमः। द्राविण्यै नमः। रौद्र्यै नमः।(८५०) काल्यै नमः। उन्मादन कारिण्यै नमः। खेचरायै नमः। कालकरण्यै नमः। बलानां विकरण्यै नमः। मनोन्मन्यै नमः। सर्वभूत दमन्यै नमः। सर्वसिद्धिदायै नमः। बलप्रमथिन्यै शक्त्यै नमः। बुद्ध्याकर्षणरूपिण्यै नमः। (८६०)

अहङ्काराकर्षिण्यै नमः। शब्दाकर्षणरूपिण्यै नमः। स्पर्शाकर्षणरूपायै नमः। रूपाकर्षणरूपिण्यै नमः। रसाकर्षणरूपायै नमः। गन्धाकर्षणरूपिण्यै नमः। चित्ताकर्षणरूपायै नमः। धैर्याकर्षणरूपिण्यै नमः। स्मृत्याकर्षणरूपायै नमः। नामाकर्षणरूपिण्यै नमः। (८७०) बीजाकर्षणरूपायै नमः। आत्माकर्षणरूपिण्यै नमः। अमृताकर्षिण्यै नमः। शरीराकर्षिण्यै नमः। षोडशस्वरसंपन्नायै नमः। स्रवत्पीयूषमण्डितायै नमः। त्रिपुरेश्यै नमः। सिद्धिदात्र्यै नमः। कलादर्शनवासिन्यै नमः। सर्वसंक्षोभचक्रेश्यै नमः।(८८०)

गुह्यतराभिधायै शक्त्यै नमः। अनङ्गकुसुमाशक्त्यै नमः। अनङ्गमेखलायै नमः। अनङ्गमदनायै नमः। अनङ्गमदनातुर-रूपिण्यै नमः। अनङ्गरेखायै नमः। अनङ्गवेगायै नमः। अनङ्गाङ्कुशाभिधायै नमः। अनङ्गमालिन्यै नमः। अष्टवर्गाधिगामिन्यै नमः।(८९०) वस्वष्टककृतावासायै नमः। श्रीमत्त्रिपुरसुन्दर्यै नमः। सर्वसाम्राज्यसुभगायै नमः। सर्वभाग्यप्रदेश्वर्यै नमः। संप्रदायेश्वर्यै नमः। सर्वसंक्षोभणकर्यै नमः। सर्वविद्रावण्यै नमः। सर्वाकर्षिण्यै नमः। रूपकारिण्यै नमः। सर्वाह्लादनशक्त्यै नमः। (९००)

सर्वसंमोहिन्यै नमः । सर्वस्तंभनशक्त्यै नमः । सर्वजृंभण कारिण्यै नमः । सर्ववश्यकशक्त्यै नमः । सर्वानुरञ्जन्यै नमः । सर्वोन्मादनशक्त्यै नमः । सर्वार्थसाधिकायै नमः । सर्वसंपत्तिदायै नमः । सर्वमातृमय्यै नमः । सर्वद्वन्द्वक्षयकर्यै नमः । (९१०) त्रिपुरवासिन्यै सिद्ध्यै नमः । चतुर्दशार चक्रेश्यै नमः । कुलयोगसमन्वयायै नमः । सर्वसिद्धिप्रदायै नमः । सर्वसंपत्प्रदायै नमः । सर्वप्रियकर्यै नमः । सर्वमङ्गलकारिण्यै नमः । सर्वकामप्रपूर्णायै नमः । सर्वदुःखविमोचिन्यै नमः । सर्वमृत्युप्रशमन्यै नमः । (९२०)

सर्वविघ्नविनाशिन्यै नमः । सर्वाङ्गसुन्दर्यै नमः । सर्वसौभाग्यदायिन्यै नमः । त्रिपुराश्रियै नमः । सर्वार्थसाधिकायै नमः । दशकोणगायै नमः । सर्वरक्षाकर्यै ईश्वर्यै नमः । योगिन्यै सर्वज्ञायै नमः । सर्वशक्त्यै नमः । सर्वैश्वर्यप्रदायै नमः । (९३०) सर्वज्ञानमय्यै नमः । सर्वव्याधि विनाशिन्यै नमः । सर्वाधारस्वरूपायै नमः । सर्वपापहरायै नमः । सर्वानन्दमय्यै नमः । सर्वरक्षास्वरूपिण्यै नमः । महाशक्त्यै सर्वेसितफलप्रदायै नमः । अन्तर्दशारचक्रस्थायै नमः । त्रिपुरमालिन्यै नमः । सर्वरोगहरायै नमः (९४०)

रहस्ययोगिन्यै नमः । वाग्देव्यै नमः । वशिन्यै नमः । कामेश्वर्यै नमः । मोदिन्यै नमः । विमलायै नमः । अरुणायै नमः । जयिन्यै नमः । शिवकामप्रदायै देव्यै नमः । शिवकामस्य सुन्दर्यै नमः ।(९५०) ललितायै नमः । ललिताध्यानफलदायै नमः । शुभकारिण्यै नमः । सर्वेश्वर्यै नमः। कौलिन्यै नमः । वसु वंशाभिवर्धिन्यै नमः । सर्वकामप्रदायै नमः। परापररहस्यविदे नमः । त्रिकोणचतुर-

श्रस्थकामेश्वर्यायुधात्मिकायै नमः। कामेश्वरीबाणरूपायै नमः। (९६०)

कामेशीचापरूपिण्यै नमः। कामेशी पाशहस्तायै नमः। कामेश्यंकुशरूपिण्यै नमः। कामेश्वरी रुद्रशक्त्यै नमः। अग्निचक्रकृतालयायै नमः। कामाभिन्नायै नमः। कामदोग्ध्र्यै नमः। कामदायै नमः। त्रिकोणगायै नमः। दशकोणेश्वर्यै नमः। (९७०) विष्णुशक्त्यै नमः। जालन्धरालयायै नमः। सूर्यचक्रालयायै नमः। वामकोणगायै नमः। सोमचक्रगायै नमः। भगमालायै नमः। बृहच्छक्तिपूर्णायै नमः। पूर्वास्त्ररागिण्यै नमः। श्रीमत्त्रिकोणभुवनायै नमः। त्रिपुराख्यमहेश्वर्यै नमः। (९८०)

सर्वानन्दमयीशान्यै नमः। बिन्दुगातिरहस्यगायै नमः। परब्रह्मस्वरूपायै नमः। महात्रिपुरसुन्दर्यै नमः। सर्वचक्रान्तरस्थायै नमः। सर्वचक्राधिदेवतायै नमः। सर्वचक्रेश्वर्यै नमः। सर्वमन्त्राणामीश्वर्यै नमः। सर्वविद्येश्वर्यै नमः। सर्ववागीश्वर्यै नमः। (९९०) सर्वयोगेश्वर्यै नमः। सर्वपीठेश्वर्यै नमः। अखिलेश्वर्यै नमः। सर्वकामेश्वर्यै नमः। सर्वतत्त्वेश्वर्यै नमः। आगमेश्वर्यै नमः। शक्तिभृदुल्लासायै शक्त्यै नमः। निर्द्वन्द्वाद्वैतगर्भिण्यै नमः। निष्प्रपञ्चायै नमः। प्रपञ्चाभायै नमः। (१०००)

महामायायै नमः। प्रपञ्चसुवे नमः। सर्वविश्वोत्पत्ति धात्र्यै नमः। परमानन्दकारणायै नमः। लावण्यसिन्धुलहर्यै नमः। सुन्दरीतोषमन्दिरायै नमः। शिवकामसुन्दरीदेव्यै नमः। सर्वमङ्गलदायिन्यै नमः॥ (१००८)

श्री शिवकामसुन्दरीसहस्रनामावलिः संपूर्णा।

# श्रीशिवकामसुन्दरीत्रिशतीनामस्तोत्रम्

## पूर्वपीठिका

कैलासमध्यशृङ्गाग्रे कल्पवृक्षादिसंकुले ।
नानामृगगणाकीर्णे मन्दमारुतवीजिते ॥ १

पक्षिबृन्दरवोद्भूतमदनाधिक्यवैभवे ।
शृङ्गारविपिने यासा पद्माकरसरस्तटे ॥ २

चिन्तामणिशिलाक्लृप्तहर्म्यप्राकारशोभिते ।
मणिमण्डपमध्ये च दिव्यसिंहासने शुभे ॥ ३

आसीनं लीलया जातु महादेवं स्मिताननम् ।
प्रणिपत्य मुदा गौरी प्रोवाच वचनं मधु ॥ ४

श्रीगौर्युवाच

देवदेव महादेव नाथ सर्वज्ञ सर्वग ।
लोके व्याधिदरिद्राद्यैः पिशाचाद्यैश्च पीडिताः ॥ ५

सर्वे जनाः कथं तेभ्यो मुच्येरन् परमेश्वर ।
तदुपायं वदेशान लोकान् उद्धर्तुम् आदरात् ॥ ६

इति पृष्टो गिरिजया शिवः सङ्कल्पवर्जितः ।
भद्रे साधु त्वया पृष्टं सर्वलोकहिताय माम् ॥ ७

वक्ष्याम्युपायं दारिद्र्यभयव्याधिविनाशनम् ।
धनधान्यायुरारोग्य-धर्मकामार्थमोक्षदम् ॥ ८

विद्याकीर्तिकरं नृणां पठनादस्य सिद्धिदम् ।
नाम्नां त्रिशतसंख्याकं स्तोत्रं मन्त्राक्षराङ्कितम् ॥ ९

शिवकामसुन्दरीदेव्याः शिवायाः परमेश्वरि।
कथयामि तव स्नेहान्न प्रकाश्यं कदाचन॥ १०

गोपनीयं प्रयत्नेन मर्मस्थलवदीश्वरि।
शिरोऽपि दातुं युक्तं हि न तद्दातुं प्रयत्नतः॥ ११

ऋषिर्ब्रह्माऽस्य गायत्रीच्छन्दः श्रीसुन्दरी शिवा।
सहस्रनामवत्सर्वं कराङ्गन्यासकौ चरेत्॥ १२

देवता कथिता चास्य स्तोत्रस्य हि वरानने।
जितेन्द्रियो जितक्रोधश्चिन्तयेत् सुन्दरीं हृदि॥ १३

॥ ध्यानम् ॥

उद्यद्भास्करसन्निभां द्विनयनां हेमानानाब्जां चतु-
र्हस्तैरम्बुजस्रक्शुकं कटिकरं संबिभ्रतीं शूलिनः।
नृत्ताडम्बरधूर्वहां शिवमयीं पद्मासनाध्यासिनीं
ध्यायेऽहं परमेश्वरीं हृदि सदा श्रीब्रह्मजायां शिवाम्॥ १४

शिवकामसुन्दरीं श्यामां शिवां शिवकरीं शुभाम्।
शिवकामकोष्ठनिलयां ध्यायेऽहं शिवमोहिनीम्॥ १५

चिन्तितार्थफलदायिनीमुमां चित्तरङ्गतलनित्यवासिनीम्।
चित्सभेश महिषीं सदाशिवां चिन्तयामि शिवकामसुन्दरीम्॥ १६

इति ध्यात्वा महादेवीं मनसाभ्यर्च्य साधकः।
लमित्यादिमवर्णैश्च पञ्च पूजाः ततः परम्॥
ततः पठेत्स्तोत्रराजं सर्वसौभाग्यवर्धकम्॥ १७

## त्रिशतनामस्तोत्रम्

ओतप्रोताण्डनिवहाऽप्योजस्वत्योघपूजिता।
ओंकारगृहकर्पूरदीपिका चौदनप्रिया॥ १

ओंकारपञ्जरशुकी चोंकारमनुवादिनी।
ओंकारमध्यनिलयाऽप्योजोनाथसमर्चिता॥ २

ओंकारवाच्या चौंकारमुख्या चौंकाररूपिणी।
ओंकारशुक्तिकामुक्तामणिश्चौंकारशब्दिता॥ ३

चक्रहस्ता चतुर्वेदवेद्या चामीकरासना।
चक्रायितसखीबृन्दा चन्द्रमण्डलमध्यगा॥ ४

चञ्चवग्रजितबिंबाभशुकसंगीतमोदिनी।
चण्डकोदण्डनिर्मुक्तबाणच्छन्नदिगन्तरा॥ ५

चण्डकोपारुणमुखी चण्डभैरवमोहिनी।
चण्डताण्डवपाण्डित्यप्रकाशनपटीयसी॥ ६

चण्डनागपरीताङ्गी चण्डदैत्यशिरोहरा।
चण्डमार्त्ताण्डधिक्कारिचन्द्रहासकराम्बुजा॥ ७

चण्डरावशिवाबृन्दनिर्जिताम्भोधिनिस्स्वना।
चतुराननसंपूज्या चतुरा चतुरार्चिता॥ ८

चन्द्रिकासितदंष्ट्राग्रा चन्दनद्रवभूषिता।
चम्पकाशोकपुन्नागपुष्पमालालसत्कचा॥ ९

चराचरोद्भवा चारुहासा चर्माम्बरप्रिया।
चापबाणगदाखड्गशंखचक्रलसत्करा॥ १०

चामरग्राहिणीवाणीरमेन्द्राणीसमावृता।
चामुण्डा चण्डिका चण्डमुण्डासुरविनाशिनी॥ ११

चारुहीरमणीभास्वत्किरीटा चक्रवर्तिनी ।
चित्रलेखा चित्ररथा चित्रलेखापितॄ(पती)डिता ।। १२

चित्रसेनस्तुता चित्रयुद्धनिर्जितदानवा ।
चित्रांशुका चित्रकर्मा चित्रानक्षत्रपूजिता ।। १३

चिदानन्दप्रदा चित्रा चित्रनृत्तपरायणा ।
चिन्ताधिकप्रदा चिन्त्या चिदम्बरनिवासिनी ।।१४

चिरञ्जीविसमाराध्या चिन्मयी चिद्विलासिनी ।
चिरन्तनी चिदाकाशमध्यगा चित्स्वरूपिणी ।। १५

चिंबीजा चणकप्रीता चणन्नूपुरपादुका ।
डाकिनी डमरुस्वानभीषणा डाकिनीश्वरी ।। १६

डाडिमीकुसुमप्रीता डाडिमीमधुलम्पटा ।
डामरी डामरीतन्त्ररूपा डुण्डिसमर्चिता ।। १७

डामरीमुख्यशक्त्यौघपरिष्कृतनिकेतना ।
डम्बाडम्बमनोहारी डिम्बोन्मत्तविनाशिनी ।। १८

ढक्काध्वनिसमुत्पन्नशब्दसर्वस्वतन्त्रिणी ।
ढक्कानिनदसंमुह्यद्देवराजाभयंकरी ।। १९

नकुलीध्वस्तनागालिर्नकुली नकुलेश्वरी ।
नखाग्रविलसद्विष्णुदशाकारा नटेश्वरी ।। २०

नटराजाङ्गना नाट्यकोविदा नागरार्चिता ।
नम्रदिक्पालवनिता नमदानन्ददायिनी ।। २१

नरकत्राणनोद्युक्ता नन्द्यावर्तसुमप्रिया ।
नरसिंहगळोन्मुक्तरुधिरास्वादनप्रिया ।। २२

नागकन्यापरिवृता नागासुरविमर्दिनी ।
नागाननसुता नागवाहा नरशवासना ।। २३

नाद ब्रह्ममयी नित्यनिर्वाणसुखदायिनी ।
नाममन्त्रजपप्रीतिकारिणी नागभूषणा ।। २४

नामरूपधरा नानावेदशास्त्रार्थदर्शिनी ।
नारायणी नामरूपवर्जिता नरवाहना ।। २५

नारी नरेन्द्रसंपूज्या नगराजनिकेतना ।
नालीकलोचना नन्दिविद्या नगसुता नटी ।। २६

नासास्तब्धमरुच्चण्डवेगा नगरपालिनी ।
निर्मला निरहंकारा निजभक्ताखिलेष्टदा ।। २७

निस्सारा नियतिर्नित्या निर्लोभा निरवग्रहा ।
नौकारूढा नीतसुधावार्धिभक्तजनप्रिया ।। २८

बृन्दानाथशिरोहर्त्री बृन्दामोहितमाधवा ।
बृन्दारकवधूबृन्दसेनास्तिमिततापसा ।। २९

बृन्दारकारिदर्पघ्नी बृहत्सेनासमावृता ।
बृन्दारकेशविलसद्वेणुनादकृतादरा ।। ३०

बृहच्छूलशिरःप्रोतशुम्भदैत्यभयङ्करी ।
बृहतीक्वणनोद्युक्तनारदर्षिसमर्चिता ।। ३१

बृहन्मद्दलभृच्चक्रपाणिसन्नुतवैभवा ।
बृहस्पतिसमाराध्या ब्राह्मी ब्रह्मैक्यरूपिणी ।। ३२

ब्रह्मजा बृहदैश्वर्यदायिनी ब्रूंमनुप्रिया ।
ब्रह्मजाया ब्रह्मबीजा ब्रह्माणी ब्रह्मवादिनी ।। ३३

ब्रह्मज्ञा ब्रह्मजननी ब्रह्मज्ञानप्रदायिनी ।
ब्रह्मदेवलयासक्तताण्डवोद्दण्डपण्डिता ।। ३४

ब्रह्मपञ्चकसंरूढा ब्रह्माण्डान्तकराम्बुजा ।
ब्रह्ममाया ब्रह्मशीर्षमालामण्डनमण्डिता ।। ३५

ब्रह्मयज्ञपराधीनहृदया ब्रह्मवित्प्रिया ।
ब्रह्मविद्या बृहद्रूपा बृहती ब्राह्मणप्रिया ।। ३६

ब्रह्मविष्णुमुखोद्गीतवैभवा ब्राह्मणार्चिता ।
ब्रह्मशीर्षहरा ब्रह्मकपालवरधारिणी ।। ३७

ब्रह्महीनमखासक्तदक्षमुख्यविनाकृता ।
ब्रह्माण्डनिवहोच्छेदताण्डवेश्वरवादिनी ।। ३८

ब्रह्माण्डसाक्षिणी ब्रह्ममोदिनी ब्रह्म एव च ।
ब्राह्मी माहेश्वरीमुख्यशक्तिव्याप्त सभांगणा ।। ३९

मदिरास्वादरसिका मधुरा मधुवैरिणी ।
मनोतिगा मनोगम्या मतङ्गतनया मधुः ।। ४०

मनोवागपरिच्छिन्ना महात्रिपुरसुन्दरी ।
मन्त्रिणी मन्त्रतन्त्रज्ञा महागायत्रिरूपिणी ।। ४१

महती मदनानन्दकारिणी मनुपूजिता ।
महनीया मही मन्दगमना मधुरस्वना ।। ४२

महर्षिगणसंपूज्या महाराज्ञी मनोन्मनी ।
महाकाली महालक्ष्मीः महावाणी महाकृतिः ।। ४३

महादेवाङ्कपर्यङ्का महावाक्यार्थगोचरा ।
महादेवी महोत्साहा मरालीगतिदेशिका ।। ४४

महामणिघटाकारकिरीटा मञ्जुभाषिणी ।
महामाया महाघोरस्वप्नवाराहिरूपिणी ॥ ४५

महामारी महातिल्ववनमध्यनिकेतना ।
महाश्मशाननटनरसिका मधुपायिनी ॥ ४६

महिमालब्धसिद्धीन्द्रमुख्यादृष्टस्वरूपिणी ।
माणिक्यवीणासंलापा मारान्तकविमोहिनी ॥ ४७

माणिभद्रस्तुता मान्या मानिनी मानवर्जिता ।
माध्यन्दिनफणीशानजैमिनिस्तुतनर्तना ॥ ४८

मारी मातङ्गिनी माता महाशैलशरीरजा ।
मांसपूजापरा मांसभक्षिणी माषलम्पटा ॥ ४९

माहेन्द्रजालचतुरा महादुर्गा महेश्वरी ।
मीनाक्षी मिथुनाकारा मदनी मादिपञ्चका ॥ ५०

मुकुन्दसहजा मुद्रामुख्या मूकत्वनाशिनी ।
मुक्ताहारलसद्ग्रीवा मुचुकुन्दनृपार्चिता ॥ ५१

मुदिता मुण्डशयनी मुक्तिदा मुरशासना ।
मूर्ता मूर्खत्वशमनी मूलविद्यास्वरूपिणी ॥ ५२

मूलाधारादिषट्चक्रनिलया मूलमन्त्रवित् ।
मूंबीजा मूर्धसंबद्धपुष्पमालाविराजिता ॥ ५३

मृडानी मृगयासक्ता मृगेन्द्रार्द्राजिनच्छदा ।
मोहान्धकारमार्ताण्डा मोक्षदानपरायणा ॥ ५४

मोदिनीपृष्टवाग्देवताष्टकस्तुतवैभवा ।
शिवकामसुन्दरी देवी शिवदा शिववामगा ॥ ५५

हयाननमुखोद्भूतपुराणमहिमोज्ज्वला ।
हयारूढादिसंसेव्या हीरदंष्ट्रा हलायुधा ।। ५६

हरमानससंमोहशृङ्गाररसवारिधिः ।
हरलीलाविनोदज्ञा हारिणी हरिणेक्षणा ।। ५७

हराग्निदग्धकन्दर्पजीवनापाङ्गलोचना ।
हरार्धाङ्गहरा हेयदेयोपादेयवर्जिता ।। ५८

हराङ्कनिलया हृद्या हृदयाकाशमध्यगा ।
हरिणाङ्कधरा हादिविद्या हरिसहोदरी ।। ५९

हरिद्राचूर्णसंपूर्णचरणा ह्रींमनुप्रिया ।
हरिनाभिसरोजोद्यत्पद्म संस्तुतयोगिनी ।। ६०

हरिब्रह्मादिमकुटनीराजितपदाम्बुजा ।
हरिब्रह्मेन्द्रविनुता हेलानिर्जितदानवा ।। ६१

हरिशङ्करसंमुह्यद्दारुकारण्यतापसा ।
हरेन्द्रमृतसंजीवद्ब्रह्मशीर्षालिगायका ।। ६२

हर्यक्षवाहनारूढा हेलाकलितविग्रहा ।
हाकिनी हलिकृष्णेड्या हंसमन्त्रस्वरूपिणी ।। ६३

हारायितफणीरत्न प्रभाजितहिमांशुका ।
हालाहलाग्निसन्तप्तदेवत्राणामृतेश्वरी ।। ६४

हासोद्यत्कालिकाभुक्तरक्तबीजासुरा हरा ।
हाहाकाररवाक्रन्दन्महिषासुरमर्दिनी ।। ६५

हिमाद्रितनया हंसवाहा हानिविवर्जिता ।
हेमघण्टालिझंकारजितकल्पाशनिध्वनिः ।। ६६

हेमपद्मधरा हस्तचतुरा हेमकञ्चुकी ।
हेमाद्रितुङ्गशृङ्गाग्रमणिमण्डपमध्यगा ॥
ह्रींबीजेत्यन्तनाम्नां च त्रिशतं कथितं तव । ६७

उत्तरपीठिका

शिवकामसुन्दरीनामान्येतानि शुभदानि हि ।
सर्वसौभाग्यदं पुण्यं विघ्नध्वान्तनभोमणिम् ॥ ६८

आयुष्करं कीर्त्तिकरं तुष्टिदं पुष्टिदं प्रिये ।
विद्याबुद्धिप्रदं नृणां सकृत्स्मरणमात्रतः ॥ ६९

यो जपित्वा महामन्त्रं शिवकाम्याः सहस्रकम् ।
त्रिशतं वा यथाशक्ति पठेत्सर्वार्थदायकम् ॥ ७०

यदिष्टं सा ददात्येव सद्य एव न संशयः ।
शुक्रवारे तथा भौमवारे पर्वणि वा प्रिये ७१

कृष्णाङ्गारचतुर्दश्यामष्टम्यां च विशेषतः ।
पद्मैर्वाऽन्यसुमैर्बिल्वैर्हरिद्राकुङ्कुमैः प्रिये ॥७२

एभिः समर्चयेद्देवीं नामभिः साधकोत्तमः ।
मूर्त्तौ वा यन्त्रराजे वा घटे वाऽऽवाह्य सुन्दरीम् ७३

अचिरादेव विन्देत वागीशत्वं सुलोचने ।
श्रीशत्वं सर्वसिद्धीनां नायकत्वं लभेद् ध्रुवम् ॥ ७४

भूतप्रेतपिशाचानां स्मरणाद् भीतिकारणम् ।
यो विप्रश्शान्तहृदयो नित्यं निष्कामनायुतः ॥७५

आवर्तयेदिदं स्तोत्रं तस्य श्रीमत्कृपाबलात् ।
इह भुक्त्वाऽखिलान् भोगान् सोऽन्ते जन्मादिवर्जितम् ॥ ७६

जीवब्रह्मैक्यचिद्रूपपदं प्राप्नोत्यसंशयः ।
एतत्स्तोत्रोपमं स्तोत्रं नान्यदस्ति हि सुव्रते ।। ७७

मयापि तत्फलं वक्तुं न शक्यं केन वा शिवे ।
तस्मादिदं गोपनीयं न प्रकाश्यं प्रयत्नतः ।
किं भूयश्श्रोतुकामासि शृङ्गाराब्धिसुधाकरे ।। ७८

इति भृङ्गिरिटिसंहितायां शक्त्युत्कर्षप्रकरणे शिवगौरीसंवादे श्री शिवकामसुन्दरीत्रिशतनामस्तोत्रं संपूर्णम् ।।

## ।। श्रीशिवकामसुन्दरीत्रिशतीनामावलिः ।।

।। ओं नमः ।।

ओतप्रोताण्डनिवहायै नमः । ओजस्वत्यै नमः । ओघपूजितायै नमः । ओंकारगृहकर्पूरदीपिकायै नमः । ओदनप्रियायै नमः । ओंकारपञ्जरशुक्यै नमः । ओंकारमनुवादिन्यै नमः । ओंकारमध्यनिलयायै नमः । ओजोनाथसमर्चितायै नमः । ओंकारवाच्यायै नमः । ओंकारमुख्यायै नमः । ओंकाररूपिण्यै नमः । ओंकारशुक्तिकामुक्तामणये नमः । ओंकारशब्दितायै नमः । चक्रहस्तायै नमः । चतुर्वेदवेद्यायै नमः । चामीकरासनायै नमः । चक्रायितसखीवृन्दायै नमः । चन्द्रमण्डलमध्यगायै नमः । चञ्चवग्रजितबिंबाभशुकसंगीतमोदिन्यै नमः । २०

चण्डकोदण्डनिर्मुक्तबाणच्छन्नदिगन्तरायै नमः । चण्डकोपारुणमुख्यै नमः । चण्डभैरवमोहिन्यै नमः । चण्डताण्डवपाण्डित्यप्रकाशनपटीयस्यै नमः । चण्डनागपरी-

ताङ्ग्यै नमः । चण्डदैत्यशिरोहरायै नमः । चण्डमार्ताण्ड-धिकारिचन्द्रहासकरांबुजायै नमः । चण्डरावशिवाबृन्दनिर्जि-ताम्भोधिनिस्वनायै नमः । चतुराननसंपूज्यायै नमः । चतुरायै नमः । चतुरार्चितायै नमः । चन्द्रिकासितदंष्ट्राग्रायै नमः । चन्दनद्रवभूषितायै नमः । चम्पकाशोकपुन्नागपुष्पमाला-लसत्कचायै नमः । चराचरोद्भवायै नमः । चारुहासायै नमः । चर्माम्बरप्रियायै नमः । चापबाणगदाखड्गशंखचक्र-लसत्करग्यै नमः । चामरग्राहिणीवाणीरमेन्द्राणीसमावृतायै नमः । चामुण्डायै नमः । ४०

चण्डिकायै नमः । चण्डमुण्डासुरविनाशिन्यै नमः । चारुहीरमणी भास्वत्किरीटायै नमः । चक्रवर्तिन्यै नमः । चित्रलेखायै नमः । चित्ररथायै नमः । चित्रलेखा-पितृ(पती)डितायै नमः । चित्रसेनस्तुतायै नमः । चित्रयुद्ध-निर्जितदानवायै नमः । चित्रांशुकायै नमः । चित्रकर्मणे नमः । चित्रानक्षत्रपूजितायै नमः । चिदानन्दप्रदायै नमः । चित्रायै नमः । चित्रनृत्तपरायणायै नमः । चिन्ताधिकप्रदायै नमः । चिन्त्यायै नमः । चिदम्बरनिवासिन्यै नमः । चिरञ्जीवि-समाराध्यायै नमः । चिन्मय्यै नमः । ६०

चिद्विलासिन्यै नमः । चिरन्तन्यै नमः । चिदाकाश-मध्यगायै नमः । चित्स्वरूपिण्यै नमः । चिं बीजायै नमः । चणकप्रीतायै नमः । चणन्नूपुरपादुकायै नमः । डाकिन्यै नमः । डमरुस्वानभीषणायै नमः । डाकिनीश्वर्यै नमः । डाडिमीकुसुमप्रीतायै नमः । डाडिमीमधुलम्पटायै नमः । डामर्यै नमः । डामरीतन्त्ररूपायै नमः । डुण्डिसमर्चितायै

नमः । डामरीमुख्यशक्त्यौघपरिष्कृतनिकेतनायै नमः । डम्बाडंबमनोहार्यै नमः । डिंबोन्मत्तविनाशिन्यै नमः । ढक्काध्वनिसमुत्पन्नशब्दसर्वस्वतन्त्रिण्यै नमः । ढक्कानिनद-संमुह्यद्देवराजाभयंकर्यै नमः । ८०

नकुलीध्वस्तनागालये नमः । नकुल्यै नमः । नकुलेश्वर्यै नमः । नखाग्रविलसद्विष्णुदशाकारायै नमः । नटेश्वर्यै नमः । नटराजाङ्गनायै नमः । नाट्यकोविदायै नमः । नागरार्चितायै नमः । नम्रदिक्पालवनितायै नमः । नमदानन्ददायिन्यै नमः । नरकत्राणनोद्युक्तायै नमः । नन्द्यावर्तसुमप्रियायै नमः । नरसिंहगलोन्मुक्तरुधिरास्वादनप्रियायै नमः । नागकन्या-परिवृतायै नमः । नागासुरविमर्दिन्यै नमः । नागाननसुतायै नमः । नागवाहायै नमः । नटशवासनायै नमः । नादब्रह्ममय्यै नमः । नित्यनिर्वाणसुखदायिन्यै नमः ।। १००

नाममन्त्रजपप्रीतिकारिण्यै नमः । नागभूषणायै नमः । नामरूपधरायै नमः । नानावेदशास्त्रार्थदर्शिन्यै नमः । नारायण्यै नमः । नामरूपवर्जितायै नमः । नरवाहनायै नमः । नार्यै नमः । नरेन्द्रसंपूज्यायै नमः । नगराजनिकेतनायै नमः । नालीकलोचनायै नमः । नन्दिविद्यायै नमः । नगसुतायै नमः । नट्यै नमः । नासास्तब्धमरुच्चण्डवेगायै नमः । नगरपालिन्यै नमः । निर्मलायै नमः । निरहंकारायै नमः । निजभक्ता-खिलेष्टदायै नमः । निस्सारायै नमः । १२०

नियत्यै नमः । नित्यायै नमः । निर्लोभायै नमः । निरवग्रहायै नमः । नौकारूढायै नमः । नीतसुधावार्धि-भक्तजनप्रियायै नमः । बृन्दानाथशिरोहर्त्र्यै नमः ।

बृन्दामोहितमाधवायै नमः । बृन्दारकवधू बृन्दसेनास्तिमिततापसायै नमः । बृन्दारकारिदर्पघ्न्यै नमः । बृहत्सेनासमावृतायै नमः । बृन्दारकेशविलसद्वेणुनादकृतादरायै नमः । बृहच्छूलशिरःप्रोतशुम्भदैत्यभयङ्कर्यै नमः । बृहतीकणनोद्युक्तनारदर्षिसमर्चितायै नमः । बृहन्मद्दलभृच्चक्रपाणिसन्नुतवैभवायै नमः । बृहस्पतिसमाराध्यायै नमः । ब्राह्म्यै नमः । ब्रह्मैक्यरूपिण्यै नमः । ब्रह्मजायै नमः । बृहदैश्वर्यदायिन्यै नमः । १४०

ब्रूंमनुप्रियायै नमः । ब्रह्मजायायै नमः । ब्रह्मबीजायै नमः । ब्रह्माण्यै नमः । ब्रह्मवादिन्यै नमः । ब्रह्मज्ञायै नमः । ब्रह्मजनन्यै नमः । ब्रह्मज्ञानप्रदायिन्यै नमः । ब्रह्मदेवलयासक्तताण्डवोद्दण्ड-पण्डितायै नमः । ब्रह्मपञ्चकसंरूढायै नमः । ब्रह्माण्डान्तकराम्बुजायै नमः । ब्रह्ममायायै नमः । ब्रह्मशीर्षमालामण्डलमण्डितायै नमः । ब्रह्मयज्ञपराधीनहृदयायै नमः । ब्रह्मवित्प्रियायै नमः । ब्रह्मविद्यायै नमः । बृहद्रूपायै नमः। बृहत्यै नमः । ब्राह्मणप्रियायै नमः । ब्रह्मविष्णुमुखोद्गीतवैभवायै नमः । १६०

ब्राह्मणार्चितायै नमः । ब्रह्मशीर्षहरायै नमः । ब्रह्मकपालवरधारिण्यै नमः । ब्रह्महीनमखासक्तदक्षमुख्यविनाकृतायै नमः । ब्रह्माण्डनिवहोच्छेदताण्डवेश्वरवादिन्यै नमः । ब्रह्माण्डसाक्षिण्यै नमः । ब्रह्ममोदिन्यै नमः । ब्रह्मणे नमः । ब्राह्म्यै नमः । माहेश्वरीमुख्यशक्तिव्याप्तसभाङ्गणायै नमः । मदिरास्वादरसिकायै नमः । मधुरायै नमः । मधुवैरिण्यै नमः । मनोतिगायै नमः । मनोगम्यायै नमः । मतङ्गतनयायै

नमः । मधवे नमः । मनोवागपरिच्छिन्नायै नमः । महात्रिपुर-सुन्दर्यै नमः । मन्त्रिण्यै नमः । १८०

मन्त्रतन्त्रज्ञायै नमः । महागायत्रिरूपिण्यै नमः । महत्यै नमः । मदनानन्दकारिण्यै नमः । मनुपूजितायै नमः । महनीयायै नमः । मह्यै नमः । मन्दगमनायै नमः । मधुरस्वनायै नमः । महर्षिगणसंपूज्यायै नमः । महाराज्ञ्यै नमः । मनोन्मन्यै नमः । महाकाल्यै नमः । महालक्ष्म्यै नमः । महावाण्यै नमः । महाकृत्यै नमः । महादेवाङ्कपर्यङ्कायै नमः । महावाक्यार्थ गोचरायै नमः । महादेव्यै नमः । महोत्साहायै नमः २००

मरालीगतिदेशिकायै नमः । महामणिघटाकारकिरीटायै नमः । मञ्जुभाषिण्यै नमः । महामायायै नमः । महाघोर-स्वप्नवाराहिरूपिण्यै नमः । महामार्यै नमः । महातिल्व-वनमध्यनिकेतनायै नमः । महाश्मशाननटनरसिकायै नमः । मधुपायिन्यै नमः । महिमालब्धसिद्धीन्द्र-मुख्यादृष्टस्वरूपिण्यै नमः । माणिक्यवीणासंलापायै नमः । मारान्तकविमोहिन्यै नमः । माणिभद्रस्तुतायै नमः । मान्यायै नमः । मानिन्यै नमः । मानवर्जितायै नमः । माध्यंदिनफणीशानजैमिनिस्तुतनर्तनायै नमः । मार्यै नमः । मातङ्गिन्यै नमः । मात्रे नमः । २२०

महाशैलशरीरजायै नमः । मांसपूजापरायै नमः । मांसभक्षिण्यै नमः । माषलम्पटायै नमः । माहेन्द्रजालचतुरायै नमः । महादुर्गायै नमः । महेश्वर्यै नमः । मीनाक्ष्यै नमः । मिथुनाकारायै नमः । मदन्यै नमः । मादिपञ्चकायै नमः । मुकुन्दसहजायै नमः । मुद्रामुख्यायै नमः । मूकत्वनाशिन्यै नमः । मुक्ताहारलसद्ग्रीवायै नमः । मुचुकुन्दनृपार्चितायै

नमः । मुदितायै नमः । मुण्डशयन्यै नमः । मुक्तिदायै नमः । मुरशासनायै नमः । २४०

मूर्त्यै नमः । मूर्खत्वशमन्यै नमः । मूलविद्यास्वरूपिण्यै नमः । मूलाधारादिषट्चक्रनिलयायै नमः । मूलमन्त्रविदे नमः । मूंबीजायै नमः । मूर्धसंबद्धपुष्पमालाविराजितायै नमः। मृडान्यै नमः । मृगयासक्तायै नमः । मृगेन्द्रार्द्राजिनच्छदायै नमः मोहान्धकारमार्ताण्डायै नमः । मोक्षदानपरायणायै नमः । मोदिनीपृष्टवाग्देवताष्टकस्तुत-वैभवायै नमः । शिवकाम-सुन्दरीदेव्यै नमः । शिवदायै नमः । शिववामगायै नमः । हयाननमुखोद्भूतपुराणमहिमोज्ज्वलायै नमः । हयारूढादि-संसेव्यायै नमः । हीरदंष्ट्रायै नमः । हलायुधायै नमः २६०

हरमानससंमोहशृङ्गाररसवारिधये नमः । हरलीला-विनोदज्ञायै नमः । हारिण्यै नमः । हरिणेक्षणायै नमः । हराग्निदग्धकन्दर्पजीवनापाङ्गलोचनायै नमः । हरार्धाङ्गहरायै नमः । हेयदेयोपादेयवर्जितायै नमः । हराङ्कनिलयायै नमः । हृद्यायै नमः । हृदयाकाशमध्यगायै नमः हरिणाङ्कधरायै नमः । हादिविद्यायै नमः । हरिसहोदर्यै नमः । हरिद्रा-चूर्णसंपूर्णचरणायै नमः । ह्रींमनुप्रियायै नमः । हरिनाभिसरो-जोद्यद्ब्रह्मसंस्तुतयोगिन्यै नमः । हरिब्रह्मादिमकुटनीराजित-पदाम्बुजायै नमः । हरिब्रह्मेन्द्रविनुतायै नमः। हेला-निर्जितदानवायै नमः । हरिशङ्करसंमुह्यद्दारुकारण्यतापसायै नमः २८०

हरेन्द्वमृतसंजीवद्ब्रह्मशीर्षालिगायकायै नमः । हर्यक्ष-वाहनारूढायै नमः । हेलाकलितविग्रहायै नमः । हाकिन्यै

नमः । हलिकृष्णेड्यायै नमः । हंसमन्त्रस्वरूपिण्यै नमः । हारायितफणीरत्नप्रभाजितहिमांशुकायै नमः । हालाहलाग्निसन्तप्तदेवत्राणामृतेश्वर्यै नमः । हासोद्यत्कालिकाभुक्तरक्तबीजासुरायै नमः । हरायै नमः । हाहाकाररवाक्रन्दन्महिषासुरमर्दिन्यै नमः । हिमाद्रितनयायै नमः । हंसवाहायै नमः । हानिविवर्जितायै नमः । हेमघण्टालिझङ्कारजितकल्पाशनिध्वन्यै नमः । हेमपद्मधरायै नमः । हस्तचतुरायै नमः । हेमकञ्चुक्यै नमः । हेमाद्रितुङ्गशृङ्गाग्रमणिमण्डपमध्यगायै नमः । ह्रीं बीजायै नमः। ३००

इति श्रीशिवकामसुन्दरीत्रिशतीनामावलिः ।।

# श्री चिदम्बरेश्वरी चिदम्बरेश्वर संमेळनाष्टोत्तर शतनामस्तोत्रम्

## पूर्व पीठिका ।।

श्री शिव उवाच-

अष्टोत्तरशतं वक्ष्ये शृणु विष्णो समाहितः ।
सदाशिव ऋषिश्छन्दो विराट् देवो नटेश्वरः ।।

इष्ट काम्यार्थ सिद्ध्यर्थे विनियोगो वरानन ।

## ।। उत्तर पीठिका ।।

नाम्नामष्टोत्तरशतं स्त्रीपुंल्लिंगक्रमेण तु ।
संपूज्य देवदेवेशौ भेजे सर्वार्थसिद्धिदम् ।। १

नमः शिवाय पञ्चार्णं ओं जुं सः संपुटं जपेत् ।
वृत्ते मन्त्रं बहिस्त्र्यश्रे ओं जुं सः चाष्ट पत्रके ।। २

त्रियंबकं दळाग्रे तु सन्ध्यार्णं मातृकावृतम्।
यन्त्रं निक्षिप्य कलशे मण्डलं विधिवद्यजेत्॥ ३

अयुतं प्रजपेन्मन्त्रं साध्यनाम पुरस्सरम्।
ततः शिवो भावनन्तु समिद्भिश्चतुरङ्गलैः ॥ ४

दुग्धाक्तसमिधा ह्यग्नौ साहस्र षट्ककं हुनेत्।
यस्तु वह्नौ जुहोत्येवं यावत्संख्येन साधकः ॥ ५

तावत् संख्यैस्सुधाकुम्भैरग्निं प्रीणाति शंकरः ।
आव्याधिघ्नाः सदा सर्वं सहस्रमीप्सितान् वरान्॥ ६

प्रदद्यादायुरादींश्च दुरुक्तात् प्रळयान्तिकान्।
त्रिबीजार्णं च साध्याख्यं पालयद्वय बीजयुक्॥ ७

अमृत मृत्युञ्जयार्णमथवा कमला पुटम्।
अमृता च वटा चैव तिलं दूर्वा पयो घृतम्॥ ८

पायसं सप्तभिर्द्रव्यैः सहस्रं जुहुयात् पृथक्।
घोरजराधिव्याधीनां दाहमोहपरिभ्रमम्॥९

ग्रहपीडाप्रशमनं शतायुर्जीवनं ततः ।
यजेद्धोमदिने सप्त विप्रान् सुदक्षिणान्वितम्॥ १०

होमावसाने विप्राणां दद्यात् ताम्बूलदक्षिणाम्।
गलूर्चीं खण्डशः कृत्वा चतुरङ्गुलमानकम्॥ ११

जुहुयाद् दुग्ध संसिक्तं सम्यग् भानुसहस्रकम्।
अभिषेकं ततः कृत्वा ह्यायुरारोग्यवर्धनम्॥१२

तिल दूर्वाऽमृताज्याभिरष्टोत्तरसहस्रकम्।
जन्मर्क्षदोषशमनं निरुपद्रवमुत्तमम्॥ १३

तिलामृतघृतान् हुत्वा सहस्रं मृत्युनाशनम् ।
छिन्नाकाश्मर्यवकुळ समिद्भिर्घृतसंयुतम्
हुत्वा सहस्रं जन्मर्क्षे दोषघ्नं रोग नाशनम् ।। १४

प्रोक्ते ध्यानजपार्चनाहुतिविधानाद्यैश्च मृत्युञ्जयं
यो मन्त्री प्रजपन्मनुं प्रतिदिनं प्रातः प्रसन्नाशयः ।
तस्येष्टानि भवन्ति संसृतिरपि स्फीता च पुत्रादयः
संपन्नाः सुसुखी च जीवति चिरं देहापदस्याच्छिवः ।।१५

## श्री चिदम्बरेश्वरी श्रीचिदम्बरेश्वर सम्मेलनाष्टोत्तरशतनामानि ।।

ओं चिदम्बरेश्वर्यै नमः । चिदम्बरेश्वराय नमः । हेमसभेश्यै नमः । हेमसभेशाय नमः । चित्सभेश्वर्यै नमः । चित्सभेश्वराय नमः । चिदम्बरसभानाथायै नमः । चिदम्बरसभानाथाय नमः। चिदम्बरसभापत्यै नमः । चिदम्बरसभापतये नमः । चिदम्बरपुराधीश्यै नमः । चिदम्बर पुराधीशाय नमः । चिदम्बरसभानट्यै नमः । चिदम्बरसभानटाय नमः । सभेश्वर्यै सभेश्वराय नमः । सभामूर्त्यै नमः । सभामूर्तये नमः । सुसम्राज्यै नमः । सुसम्राजे नमः । १०

सदसस्पत्यै नमः । सदसस्पतये नमः । चिन्मय्यै नमः । चिन्मयाय नमः । चित्सभानाथायै नमः । चित्सभानाथाय नमः । नटेश्यै नमः । नटेशाय नमः । नटनायक्यै नमः । नटनायकाय नमः । सभामण्यै नमः । सभामणये नमः । सभादीप्तायै नमः । सभादीप्ताय नमः । नटराज्यै नमः । नटराजे

नमः । ताण्डवेश्वर्यै नमः । ताण्डवेश्वराय नमः । पुण्डरीकपुराधीश्यै नमः । पुण्डरीकपुराधीशाय नमः । २०

पुण्डरीकपुरेश्वर्यै नमः । पुण्डरीकपुरेश्वराय नमः । पुण्डरीकरुच्यै नमः । पुण्डरीकरुचये नमः । वंद्यायै नमः । वंद्याय नमः । पुण्डरीकाक्षसेवितायै नमः । पुण्डरीकाक्षसेविताय नमः । तिल्व रुद्राण्यै नमः । तिल्व रुद्राय नमः । महा रुद्राण्यै नमः । महा रुद्राय नमः । नृत्तांग्यै नमः । नृत्तांगाय नमः । नृत्तसुन्दर्यै नमः । नृत्त सुन्दराय नमः । पञ्चाक्षर्यै नमः । पञ्चाक्षराय नमः । परस्मै ज्योतिषे नमः । परस्मै ज्योतिषे नमः । ३०

सुन्दरानन्द विग्रहायै नमः । सुन्दरानन्द विग्रहाय नमः । आनन्द नटनाधीश्यै नमः । आनन्द नटनाधीशाय नमः । सच्चिदानन्द विग्रहायै नमः । सच्चिदानन्द विग्रहाय नमः । व्योम व्योम्ने नमः । व्योम व्योम्ने नमः । व्योम केश्यै नमः । व्योम केशाय नमः । चिन्महा व्योम ताण्डवायै नमः । चिन्महा व्योम ताण्डवाय नमः । अम्बराधीश्वर्यै नमः । अम्बराधीश्वराय नमः । हंस्यै नमः । हंसाय नमः । कुञ्चिताङ्घ्र्यै नमः । कुञ्चिताङ्घ्रये नमः । चिदम्बरायै नमः । चिदम्बराय नमः । ४०

तिल्ववासायै नमः । तिल्ववासाय नमः । चिदीशान्यै नमः । चिदीशानाय नमः । विराज्यै नमः । विराजे नमः । तिल्व वनाधिपायै नमः । तिल्ववनाधिपाय नमः । त्रैलोक्यसुन्दर्यै नमः । त्रैलोक्यसुन्दराय नमः । तिल्ववन्यै नमः। तिल्ववनाय नमः । तिल्वपुरेश्वर्यै नमः । तिल्वपुरेश्वराय नमः । व्याघ्रचर्मधरायै नमः । व्याघ्रचर्मधराय नमः ।

व्याघ्रपुरेश्यै नमः । व्याघ्रपुरेशाय नमः । व्याघ्रपात्प्रियायै नमः । व्याघ्रपात्प्रियाय नमः । ५०

कृपानिध्यै नमः । कृपानिधये नमः । महाकाल्यै नमः । महाकालाय नमः । व्याघ्रपादप्रपूजितायै नमः । व्याघ्रपादप्रपूजिताय नमः । मन्त्रविग्रहायै नमः । मन्त्रविग्रहाय नमः । ओंकार्यै नमः । ओंकाराय नमः । सिंहवर्म प्रपूजितायै नमः । सिंहवर्मप्रपूजिताय नमः । जटाधरायै नमः । जटाधराय नमः । ललाटाक्ष्यै नमः । ललाटाक्षाय नमः । पतञ्जलिवरप्रदायै नमः । पतञ्जलि वरप्रदाय नमः । अपस्मार हरायैनमः । अपस्मारहराय नमः । ६०

सर्प भूषणायै नमः । सर्प भूषणाय नमः । फणिराट्प्रियायै नमः । फणिराट्प्रियाय नमः । महाकामेश्वर्यै नमः । महाकामेश्वराय नमः । वज्रेश्वर्यै नमः । वज्रेश्वराय नमः । प्रासाद विग्रहायै नमः । प्रासादविग्रहाय नमः । आनन्दताण्डवायै नमः । आनन्दताण्डवाय नमः । रक्तपादायै नमः । रक्तपादाय नमः । सुन्दरताण्डवायै नमः । सुन्दरताण्डवाय नमः । हरिप्रियायै नमः । हरिप्रियाय नमः । हरायै नमः । हराय नमः । (७०)

शाम्भव्यै नमः । शम्भवे नमः । ईश्वर्यै नमः । ईश्वराय नमः । जैमिनिप्रियायै नमः । जैमिनिप्रियाय नमः । मणिनूपुरपादायै नमः । मणिनूपुरपादाय नमः । श्रीचक्र वासायै नमः । श्रीचक्र वासाय नमः । उमापत्यै नमः । उमापतये नमः । त्रिलोचनायै नमः । त्रिलोचनाय नमः । शूलपाणये नमः । शूलपाणये नमः । भूतेश्यै नमः । भूतेशाय नमः । वृषभध्वजायै नमः । वृषभध्वजाय नमः । (८०)

श्रीचक्रप्रियायै नमः । श्रीचक्रप्रियाय नमः । उग्रांग्यै नमः । उग्रांगाय नमः । त्रिपुरायै नमः । त्रिपुराय नमः । त्रिपुरेश्वर्यै नमः । त्रिपुरेश्वराय नमः । मन्त्रमूर्त्यै नमः । मन्त्रमूर्तये नमः । सभाचक्रायै नमः । सभा चक्राय नमः । चक्र राज्यै नमः । चक्र राजे नमः । चक्र विग्रहायै नमः । चक्र विग्रहाय नमः । परप्रकाशायै नमः । परप्रकाशाय नमः । शिवकामसुन्दर्यै नमः । शिवकामसुन्दराय नमः । ९०

परात्परायै नमः । परात्पराय नमः । परमेश्वर्यै नमः । परमेश्वराय नमः । सभेश्यै नमः । सभेशाय नमः । श्रीमद्दभ्र सभेश्वर्यै नमः । श्रीमद्दभ्रसभेश्वराय नमः । महेश्वर्यै नमः । महेश्वराय नमः । महादेव्यै नमः । महादेवाय नमः । शंकर्यै नमः । शंकराय नमः । चन्द्रशेखरायै नमः । चन्द्रशेखराय नमः । ईशायै नमः । ईशाय नमः । तत्पुरुषायै नमः । तत्पुरुषाय नमः । १००

अघोरायै नमः । अघोराय नमः । वामायै नमः । वामाय नमः । सद्यायै नमः । सद्याय नमः । सदाशिवायै नमः । सदाशिवाय नमः । भुवनेशायै(श्यै) नमः । भुवनेशाय नमः । विश्वनाथायै नमः । विश्वनाथाय नमः । शिवायै नमः । शिवाय नमः । त्रिपुरसुन्दर्यै नमः । त्रिपुर सुन्दराय नमः । १०८

ओं श्री शिवकामसुन्दरी समेत श्री चित्सभेश्वराय नमः ।।

इति श्री चिदम्बर रहस्योक्तानि श्री चिदम्बरेश्वरी श्री चिदम्बरेश्वर संमेलन अष्टोत्तर शत नामानि ।

# श्री ताण्डवेश्वरी ताण्डवेश्वर संमेळनाष्टोत्तर शतनामानि

श्री सूतः -

शृणुध्वं मुनयस्सर्वे रहस्यातिरहस्यकम्।
पुरा व्यासेन कथितं विविक्ते मां प्रति प्रियात्॥ १

नारायणात् समालब्धं स्मरणात् पठनात् सकृत्।
इष्टार्थदं हि सर्वेषां अन्ते कैवल्यदं शुभम्॥ २

सम्मेळन सभानाथ पारमेश्वर ताण्डवम्।
अष्टोत्तर शतं वक्ष्ये तथा ध्यान पुरस्सरम्॥ ३

## ध्यानम्

शय्यापस्मारपृष्ठे स्थितिपदविलसद्वाममुद्धृत्य पादं
ज्वालामालासु मध्येनटनमहिपतिव्याघ्रपादादिसेव्यम्।
भस्मालेपाक्षमालाभरणविलसितं वह्निडोळाभयाङ्कं
हस्तैर्ढक्कां दधानं भज हृदि सततं साम्बिकं ताण्डवेशम्॥

## श्रीताण्डवसंमेलनाष्टोत्तरशतनामावलिः॥

ओं सदाशिवताण्डवायै नमः । सदाशिवताण्डवाय नमः। महेशताण्डवायै नमः । महेशताण्डवाय नमः । रौद्रताण्डवायै नमः । रौद्रताण्डवाय नमः । ओंकारताण्डवायै नमः । ओंकारताण्डवाय नमः । विष्णुहृत्पद्मताण्डवायै नमः । विष्णुहृत्पद्मताण्डवाय नमः । ब्रह्मशीर्षोर्ध्वताण्डवायै नमः । ब्रह्मशीर्षोर्ध्वताण्डवाय नमः । आनन्दताण्डवायै नमः । आनन्दताण्डवाय नमः । चिन्महाव्योमताण्डवायै नमः । चिन्महाव्योमताण्डवाय नमः । सत्वचिद्घनताण्डवायै नमः ।

सत्वचिद्घनताण्डवायै नमः । गौरीताण्डवायै नमः । गौरीताण्डवाय नमः । १०

सन्ध्याताण्डवायै नमः । सन्ध्याताण्डवाय नमः । अजपाताण्डवायै नमः । अजपाताण्डवाय नमः । काळीताण्डवायै नमः । काळीताण्डवाय नमः । दहराकाशताण्डवायै नमः । दहराकाशताण्डवाय नमः । त्रिपुरताण्डवायै नमः । त्रिपुरताण्डवाय नमः । अनवरतताण्डवायै नमः । अनवरतताण्डवाय नमः । हंसताण्डवायै नमः । हंसताण्डवाय नमः । उन्मत्तताण्डवायै नमः । उन्मत्तताण्डवाय नमः । पारावततरङ्गताण्डवायै नमः । पारावततरङ्गताण्डवाय नमः । महाकुक्कुटताण्डवायै नमः । महाकुक्कुटताण्डवाय नमः । २०

भृङ्गिताण्डवायै नमः । भृङ्गिताण्डवाय नमः । कमलाताण्डवायै नमः । कमलाताण्डवाय नमः । हंसपादताण्डवायै नमः । हंसपादताण्डवाय नमः । सुन्दरताण्डवायै नमः । सुन्दरताण्डवाय नमः । सदाऽभयप्रदताण्डवायै नमः । सदाऽभयप्रदताण्डवाय नमः । मूर्तिताण्डवायै नमः । मूर्तिताण्डवाय नमः । कैवल्यताण्डवायै नमः । कैवल्यताण्डवाय नमः । मोक्षताण्डवायै नमः । मोक्षताण्डवाय नमः । हालास्यताण्डवायै नमः । हालास्यताण्डवाय नमः । शाश्वतताण्डवायै नमः । शाश्वतताण्डवाय नमः । ३०

रूपताण्डवायै नमः । रूपताण्डवाय नमः । निश्चलताण्डवायै नमः । निश्चलताण्डवाय नमः । ज्ञानताण्डवायै नमः । ज्ञानताण्डवाय नमः ।

निरामयताण्डवायै नमः । निरामयताण्डवाय नमः । जगन्मोहताण्डवायै नमः । जगन्मोहताण्डवाय नमः । हेलाकलितताण्डवायै नमः । हेलाकलितताण्डवाय नमः । वाचामगोचरताण्डवायै नमः । वाचामगोचरताण्डवाय नमः । अखण्डाकारताण्डवायै नमः । अखण्डाकारताण्डवाय नमः । षट्चक्रताण्डवायै नमः । षट्चक्रताण्डवाय नमः । सर्पताण्डवायै नमः । सर्पताण्डवाय नमः । ४०

दक्षाध्वरध्वंसताण्डवायै नमः । दक्षाध्वरध्वंसताण्डवाय नमः । सप्तलोकैकताण्डवायै नमः । सप्तलोकैकताण्डवाय नमः । अपस्मारहरताण्डवायै नमः । अपस्मारहरताण्डवाय नमः । आद्यताण्डवायै नमः । आद्यताण्डवाय नमः । गजसंहारताण्डवायै नमः । गजसंहारताण्डवाय नमः । तिल्वारण्यताण्डवायै नमः । तिल्वारण्यताण्डवाय नमः । अष्टकरताण्डवायै नमः । अष्टकरताण्डवाय नमः । चित्सभामध्यताण्डवायै नमः । चित्सभामध्यताण्डवाय नमः । चिदम्बरताण्डवायै नमः । चिदम्बरताण्डवाय नमः । त्रैलोक्यसुन्दरताण्डवायै नमः । त्रैलोक्यसुन्दरताण्डवाय नमः । ५०

भीमताण्डवायै नमः । भीमताण्डवाय नमः । पुण्डरीकाक्षदृक्पादताण्डवायै नमः । पुण्डरीकाक्षदृक्पाद-ताण्डवाय नमः । व्याघ्रताण्डवायै नमः । व्याघ्रताण्डवाय नमः । कुञ्चितताण्डवायै नमः । कुञ्चितताण्डवाय नमः । अघोरताण्डवायै नमः । अघोरताण्डवाय नमः । विश्वरूपताण्डवायै नमः । बिश्वरूपताण्डवाय नमः । महाप्रळयताण्डवायै नमः । महाप्रळयताण्डवाय नमः ।

हुंकारताण्डवायै नमः । हुंकारताण्डवाय नमः । विजयताण्डवायै नमः । विजयताण्डवाय नमः । भद्रताण्डवायै नमः । भद्रताण्डवाय नमः । ६०

भैरवानन्दताण्डवायै नमः । भैरवानन्दताण्डवाय नमः । महाट्टहासताण्डवायै नमः । महाट्टहासताण्डवाय नमः । अहंकारताण्डवायै नमः । अहंकारताण्डवाय नमः । प्रचण्डताण्डवायै नमः । प्रचण्डतांडवाय नमः । चण्डतांडवायै नमः । चण्डतांडवाय नमः । महोग्रतांडवायै नमः । महोग्रतांडवाय नमः । युगान्ततांडवायै नमः । युगान्ततांडवाय नमः । मन्वन्ततांडवायै नमः । मन्वन्ततांडवाय नमः । कल्पतांडवायै नमः । कल्पतांडवाय नमः । रत्नसंसत्तांडवायै नमः । रत्नसंसत्तांडवाय नमः । ७०

चित्रसंसत्तांडवायै नमः । चित्रसंसत्तांडवाय नमः । ताम्रसंसदि ताण्डवायै नमः । ताम्रसंसदितांडवाय नमः । रजतश्रीसभातांडवायै नमः । रजतश्रीसभातांडवाय नमः । स्वर्णसभाश्रीचक्रतांडवायै नमः । स्वर्णसभाश्रीचक्रतांडवाय नमः । कामगर्वहरताण्डवायैनमः नमः । कामगर्वहरताण्डवाय नमः । नन्दिताण्डवायै नमः । नन्दिताण्डवाय नमः । महादोर्दण्डताण्डवायै नमः । महादोर्दण्डताण्डवाय नमः । परिभ्रमणताण्डवायै नमः । परिभ्रमणताण्डवाय नमः । उद्दण्डताण्डवायै नमः । उद्दण्डताण्डवाय नमः । भ्रमरायितताण्डवायै नमः । भ्रमरायितताण्डवाय नमः । ८०

शक्तिताण्डवायै नमः । शक्तिताण्डवाय नमः । निशानिश्चलताण्डवायै नमः । निशानिश्चलताण्डवाय नमः । अपसव्यताण्डवायै नमः । अपसव्यताण्डवाय नमः ।

ऊर्जितताण्डवायै नमः । ऊर्जितताण्डवाय नमः । कराब्जधृतकालाग्नितताण्डवायै नमः । कराब्जधृत-कालाग्नितताण्डवाय नमः । कृत्यपञ्चकताण्डवायै नमः । कृत्यपञ्चकताण्डवाय नमः । पतञ्जलिसुसंदृष्टताण्डवायै नमः । पतञ्जलिसुसंदृष्टताण्डवाय नमः । कङ्काळताण्डवायै नमः । कङ्काळताण्डवाय नमः । ऊर्ध्वताण्डवायै नमः । ऊर्ध्वताण्डवाय नमः । प्रदोषताण्डवायै नमः । प्रदोषताण्डवाय नमः । ९०

मृत्युमथनताण्डवायै नमः । मृत्युमथनताण्डवाय नमः । वृषशृंगाग्रताण्डवायै नमः । वृषशृंगाग्रताण्डवाय नमः । बिन्दुमध्यताण्डवायै नमः । बिन्दुमध्यताण्डवाय नमः । कलारूपताण्डवायै नमः । कलारूपताण्डवाय नमः । विनोदताण्डवायै नमः । विनोदताण्डवाय नमः । प्रौढताण्डवायै नमः । प्रौढताण्डवाय नमः । भिक्षाटनताण्डवायै नमः । भिक्षाटनताण्डवाय नमः । विराड्रूपताण्डवायै नमः । विराड्रूपताण्डवाय नमः । भुजंगत्रासताण्डवायै नमः । भुजंगत्रासताण्डवाय नमः । भुजंगललितताण्डवायै नमः । भुजंगललितताण्डवाय नमः । १००

तत्वताण्डवायै नमः । तत्वताण्डवाय नमः । मुनिताण्डवायै नमः । मुनिताण्डवाय नमः । कल्याणताण्डवायै नमः । कल्याणताण्डवाय नमः । मनोज्ञताण्डवायै नमः । मनोज्ञताण्डवाय नमः । आर्भटीताण्डवायै नमः । आर्भटीताण्डवाय नमः । कालकूटभक्षणताण्डवायै नमः । कालकूटभक्षणताण्डवाय

नमः । पञ्चाक्षरमहामन्त्रताण्डवायै नमः । पञ्चाक्षरमहामन्त्रताण्डवाय नमः । परमानन्दताण्डवायै नमः । परमानन्दताण्डवाय नमः ।

## उत्तर पीठिका

इत्येवं कथितं विप्राः ताण्डवाष्टोत्तरं शतम् ।
पदान्ते ताण्डवं योज्य स्त्रीपुंलिंग क्रमेण तु ।। १

सुगन्धैः कुसुमैर्बिल्वपत्रैर्द्रोणार्क चम्पकैः ।
सम्पूज्य श्री शिवं देवीं नित्यं कालत्रयेष्वपि ।। २

एक कालं द्विकालं वा त्रिपक्षं वा त्रिवारकम् ।
सर्वान्कामानवाप्नोति सर्व पापैः प्रमुच्यते ।। ३

इति श्री चिदम्बर रहस्ये महेतिहासे प्रथमांशे श्री ताण्डवेश्वरी ताण्डवेश्वर संमेळनाष्टोत्तर शतनाम स्तोत्रं नाम चतुर्विंशोऽध्यायः ।।

ओं नटराजाय विद्महे ताण्डवेश्वराय धीमहि ।

तन्नः चिदम्बरः प्रचोदयात् ।।

।। शिवमयम् ।।

# श्री शिवकामसुन्दर्यंबाष्टोत्तरशतनामस्तोत्रम्

महामनोन्मनीशक्तिः शिवशक्तिः शिवंकरी।
इच्छाशक्तिक्रियाशक्तिज्ञान शक्तिस्वरूपिणी ।। १

शान्त्यतीतकलानन्दा शिवमाया शिवप्रिया।
सर्वज्ञा सुन्दरी सौम्या सच्चिदानन्दरूपिणी ।। २

परापरमयी बाला त्रिपुरा कुण्डली शिवा।
रुद्राणी विजया सर्वा शर्वाणी भुवनेश्वरी ।। ३

कल्याणी शूलिनी कान्ता महात्रिपुरसुन्दरी।
मालिनी मानिनी चैव मदनोल्लासमोहिनी ।। ४

महेश्वरी च मातंगी शिवकामी चिदात्मिका।
कामाक्षी कमलाक्षी च मीनाक्षी सर्वसाक्षिणी ।। ५

उमादेवी महाकाली सामा सर्वजनप्रिया।
चित्परा चिद्घनानन्दा चिन्मयी चित्स्वरूपिणी ।। ६

महासरस्वती दुर्गा ज्वाला दुर्गादिमोहिनी।
नकुली शुद्धविद्या च सच्चिदानन्दविग्रहा ।। ७

सुप्रभा सुप्रभाज्वाला इन्द्राक्षी सर्वमोहिनी।
महेन्द्रजालमध्यस्था माया मायाविनोदिनी ।। ८

विश्वेश्वरी वृषारूढा विद्याजालविनोदिनी।
मन्त्रेश्वरी महालक्ष्मीः महाकाली फलप्रदा ।। ९

चतुर्वेदविशेषज्ञा सर्पिणी सर्वदेवता।
महेन्द्राणी गणाध्यक्षा महाभैरवपूजिता ।। १०

महामाया महाघोरा महादेवी मलापहा।
महिषासुरसंहारी चण्डमुण्डकुलान्तका ।। ११

चक्रेश्वरी चतुर्वेद्या सर्वदा सुरनायिका ।
षट्शास्त्रनिपुणा नित्या षड्दर्शनविचक्षणा ।। १२

कालरात्रिः कलातीता कविराजमनोहरा ।
शारदा तिलकाकारा धीरा धीरजनप्रिया ।। १३

उग्रमारी महामारी क्षिप्रमारी रणप्रिया ।
अन्नपूर्णेश्वरी माता स्वर्णाकारतडित्प्रभा ।। १४

स्वरव्यञ्जनवर्णाढ्या गद्यपद्यादिकारणा ।
पदवाक्यार्थनिलया बिन्दुनादादिकारणा ।। १४

मोक्षेशमहिषी सत्या भुक्तिमुक्तिफलप्रदा ।
विज्ञानदायिनी प्राज्ञा प्रज्ञानफलदायिनी ।। १६

अहंकारकलातीता पराशक्तिः परात्परा ।
अष्टोत्तरशतं नाम्नां शिवकाम्याः प्रकीर्तितम् ।। १७

भक्तिदं मुक्तिदं चैव सर्वकामफलप्रदम् ।
आयुष्करं पुष्टिकरं क्षिप्रारोग्यप्रदायकम् ।। १८

नित्यं च पठतां नॄणां सर्वसौभाग्यवर्धकम् ।
इति श्रीशिवकामसुन्दर्यम्बाष्टोत्तरशतनामस्तोत्रं
संपूर्णम् ।।

## ।। श्रीशिवकामसुन्दर्यष्टोत्तरशतनामावलिः ।।

ओं महामनोन्मनीशक्त्यै नमः । शिवशक्त्यै नमः । शिवङ्कर्यै नमः । इच्छाशक्तिक्रियाशक्तिज्ञानशक्तिस्वरूपिण्यै नमः । शान्त्यतीतकलानन्दायै नमः । शिवमायायै नमः । शिवप्रियायै नमः । सर्वज्ञायै नमः । सुन्दर्यै नमः । सौम्यायै नमः ।(१०) सच्चिदानन्दरूपिण्यै नमः । परापरमय्यै नमः । बालायै नमः । त्रिपुरायै नमः । कुण्डल्यै नमः । शिवायै नमः । रुद्राण्यै नमः । विजयायै नमः । सर्वायै नमः । शर्वाण्यै नमः ।(२०)

भुवनेश्वर्यै नमः । कल्याण्यै नमः । शूलिन्यै नमः । कान्तायै नमः । महात्रिपुरसुन्दर्यै नमः । मालिन्यै नमः । मानिन्यै नमः । मदनोल्लासमोहिन्यै नमः । महेश्वर्यै नमः । मातंग्यै नमः ।(३०) शिवकाम्यै नमः । चिदात्मिकायै नमः । कामाक्ष्यै नमः । कमलाक्ष्यै नमः । मीनाक्ष्यै नमः । सर्वसाक्षिण्यै नमः । उमादेव्यै नमः । महाकाल्यै नमः । सामायै नमः । सर्वजनप्रियायै नमः । (४०)

चित्परायै नमः । चिद्घनानन्दायै नमः । चिन्मय्यै नमः । चित्स्वरूपिण्यै नमः । महासरस्वत्यै नमः । दुर्गायै नमः । ज्वालादुर्गादिमोहिन्यै नमः । नकुल्यै नमः । शुद्धविद्यायै नमः । सच्चिदानन्दविग्रहायै नमः ।(५०) सुप्रभायै नमः । सुप्रभाज्वालायै नमः । इन्द्राक्ष्यै नमः । सर्वमोहिन्यै नमः । महेन्द्रजालमध्यस्थायै नमः । मायायै नमः । मायाविनोदिन्यै नमः । विश्वेश्वर्यै नमः । वृषारूढायै नमः । विद्याजालविनोदिन्यै नमः ।(६०)

मन्त्रेश्वर्यै नमः । महालक्ष्म्यै नमः । महाकालीफलप्रदायै नमः । चतुर्वेदविशेषज्ञायै नमः । सर्पिण्यै नमः । सर्वदेवतायै नमः । महेन्द्राण्यै नमः । गणाध्यक्षायै नमः । महाभैरवपूजितायै

नमः । महामायायै नमः ।(७०) महाघोरायै नमः । महादेव्यै नमः । मलापहायै नमः । महिषासुरसंहार्यै नमः । चण्डमुण्डकुलान्तकायै नमः । चक्रेश्वर्यै नमः । चतुर्वेद्यायै नमः । सर्वदायै नमः । सुरनायिकायै नमः । षट्शास्त्रनिपुणायै नमः ।(८०)

नित्यायै नमः । षड्दर्शनविचक्षणायै नमः । कालरात्र्यै नमः । कलातीतायै नमः ।। कविराजमनोहरायै नमः । शारदातिलकाकारायै नमः । धीरायै नमः । धीरजनप्रियायै नमः । उग्रमार्यै नमः । महामार्यै नमः ।(९०) क्षिप्रमार्यै नमः । रणप्रियायै नमः । अन्नपूर्णेश्वर्यै नमः । मात्रे नमः । स्वर्णीकारतटित्प्रभायै नमः । स्वरव्यञ्जनवर्णाढ्यायै नमः । गद्यपद्यादिकारणायै नमः । पदवाक्यार्थनिलयायै नमः । बिन्दुनादादिकारणायै नमः । मोक्षेशमहिष्यै नमः ।(१००) सत्यायै नमः । भुक्तिमुक्तिफलप्रदायै नमः । विज्ञानदायिन्यै नमः । प्राज्ञायै नमः । प्रज्ञानफलदायिन्यै नमः । अहंकारकलातीतायै नमः । पराशक्त्यै नमः । परात्परायै नमः ।(१०८)

इति श्रीशिवकामसुन्दर्यम्बाष्टोत्तरशतनामावलिः संपूर्णा

